त्रयोदशोऽध्यायारंभः

"यस्य निःश्वसितं वेदः यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनः यातः कुरुक्षेत्रे युदर्णवम् ॥१॥
वेदो गीता तथा गीता वेद एव न संशयः। वेदगीतापृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनात् ॥२॥

इदमिति = हे कौन्तेय! हे कुन्तीसुत! हे अर्जुन! इदं पाञ्चभौतिकं शरीरं देहः क्षेत्रं = रागद्वेषादि दोषविशिष्टः पुमान् क्षीयतेऽनेनेति क्षेत्रं यद्वा क्षितेः संसारात्मकात् अनर्थात् शमादियुक्तं पुरुषं त्रायते इति क्षेत्रम्। यद्वा सदा दीपशिखावत् स्वयं क्षिणोति इति क्षेत्रम्। यद्वा सुख दुःखादि फलोत्पादने क्षेत्रवदाचरतीति क्षेत्रम् इति विद्वैः अभिधीयते कथ्यते। एतत् क्षेत्रं यः पुरुषः वेत्ति जानाति तद्विदः क्षेत्रविदः पुरुषाः क्षेत्रज्ञः क्षेत्रं प्रकृतिं प्राकृतं सर्वं दृश्यं स्वतोऽभिन्नं जानातीति क्षेत्रज्ञः आत्मा इति तं प्राहुः कथयन्ति ॥१॥

अर्जुन उवाच॰ प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च। एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयञ्च केशव ॥१॥

(मू॰ गी॰) इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥२॥

(वेद गी॰) अक्षेत्रवित् क्षेत्रविदं ह्यप्राट् स प्रैति क्षेत्रविदानुशिष्टः।
एतत् वै भद्रमनुशासनस्योत स्रुतिं विन्दत्यञ्जसीनाम् ॥ ऋ॰ मं॰ १० सू॰ ३२ मं॰ ७ ऋ॰ अष्ट॰ ८ अध्या॰ ७ व॰ ३ मं॰ ७

अक्षेत्रविदिति = अक्षेत्रवित् = क्षि = निवासगत्योः क्षीयते गम्यतेऽनेनेति क्षेत्रं देहः यद्वा क्षितेः संसारात्मकात् अनर्थात् शमादियुक्तं पुरुषं त्रायते इति क्षेत्रं देहः यद्वा सदा दीपशिखावत् स्वयं क्षिणोतीति क्षेत्रं देहः यद्वा सुखदुःखदुःखादि फलोत्पादने क्षेत्रवदाचरतीति क्षेत्रं देहः तं क्षेत्रं देहं वेत्तीति क्षेत्रवित् – न क्षेत्रवित् अक्षेत्रवित् देहमजानन् पुरुषः क्षेत्रविदं क्षेत्रज्ञं पुरुषमप्राट् पृष्टवान्। सः क्षेत्रस्य अज्ञाता अज्ञानी पुरुषः क्षेत्रविदा क्षेत्रज्ञेन अनुशिष्टः देहं क्षेत्रं, आत्मा क्षेत्रज्ञः इति शिक्षां प्राप्तः सन् प्रैति स्वाऽभिलषितपदवीं गच्छति अनुशासनस्य देहोऽयमयमात्मा, इत्युपदेशस्य एतत् वै वचनमस्य भद्रं कल्याणमेव उत अपि च अञ्जसीनां ऋजुना मार्गेण गन्तव्यानां प्राणिनां स्रुतिं मार्गं विन्दति लभते यद्वा "अञ्जसीनामित्यत्र द्वितीया ज्ञेया अञ्जसीनाम ऋजुम अकुटिलम अप्रयासेन गन्तव्यां स्रुतिं मार्गं विन्दति लभते ॥ ८

४२५

पं. १ *क्षेत्रं देहः = तस्माद् बाह्यदेहे अविशिष्टः पुमान् क्षीयतेऽनेन इति क्षेत्रम्। यद्वा क्षितेः [struck-out] सत्यकात् अनर्थात् श्वासादियुक्तं पुरुषं त्रायते इति क्षेत्रम्। यद्वा सदा दीपशिखावत् स्वयं क्षिणोति इति क्षेत्रम्। यद्वा सुखदुःखादिफलोत्पादने क्षेत्रवदाचरतीति क्षेत्रं तस्य क्षेत्रस्य *

क्षेत्रज्ञमिति = हे भारत! हे भरतकुलोत्पन्न! हे अर्जुन! सर्वक्षेत्रेषु समस्तपिण्डेषु क्षेत्रज्ञं क्षेत्रस्य देहस्य ज्ञातारम् आत्मानं मां विद्धि जानीहि। क्षेत्रक्षेत्रज्ञयोः प्रकृतिपुरुषयोः यत् याथातथ्यवेदनम् अस्ति, तत् ज्ञानं मम सर्वज्ञस्य परमेश्वरस्य ~~मम~~ अभिमतं मतम् निश्चयोऽस्ति ॥ २ ॥

(मू. गी.) ~~[struck-out]~~ क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत!।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥

(वेद गी.) यस्मिन् वृक्षे सुपलाशे देवैः संपिबते यमः।
अत्रा नो विश्पतिः पिता पुराणाँ अनुवेनति ॥ १ ॥
ऋ. अष्ट. ८ अध्या. ६ व. २३ मं. १ तै. आर. ६।५।३

यस्मिन्निति = यस्मिन् सुपलाशे शोभनाङ्गप्रत्यङ्गपर्णोपेते वृक्षे वृश्चनशीले क्षेत्रे पिण्डे वर्तमानः, यमः नियन्ता आत्मा देवैः अन्तःकरणादिभिः स्वकीयैः इन्द्रियैः संपिबते सम्यक्तया कर्मफलम् उपभुङ्क्ते। पिता पालकः वेदज्ञानप्रदानेन पालयिता विश्पतिः विशां प्रजानां पतिः स्वामी परमेश्वरः अत्र अस्मिन् क्षेत्रे स्थितान् पुराणान् पुरातनान् चिरन्तनान् भक्तात्मनः नोऽस्मानपि अनुवेनति अनुग्राह्यत्वेन कामयते स्वसमीपं करोतीत्यर्थः ॥ १ ॥

तत्क्षेत्रमिति= तत् क्षेत्रं शरीरं यत् यत्स्वरूपम् यादृक् स्वस्वरूपेण यादृशमस्ति। यद्विकारि यैः स्वपरिणामैः विकृतं भवति। यतश्च यस्मात् कारणात् यत् कार्यं संभवति। स च क्षेत्रज्ञः यः यत्स्वरूपः यत्प्रभावः यादृशस्वभावः भवति। तत् क्षेत्रस्वरूपं च समासेन संक्षेपेण मे मत्तः शृणु श्रवणं कुरु ॥३॥ ऋषिभिरिति= क्षेत्रक्षेत्रज्ञस्वरूपम् ऋषिभिः वसिष्ठादिभिः ऋषिभिः, तथा विविधैः नानाप्रकारैः छन्दोभिः ऋग्यजुःप्रभृतिभिः वेदैः पृथक् पृथक् हेतुमद्भिः अर्थसाधकयुक्तिमद्भिः विनिश्चितैः निश्चितार्थैः ब्रह्मसूत्रपदैः वेदान्तसूत्रैः यथार्थस्वरूपं गीतं सम्यक्तया वर्णितम् ॥४॥

(मू॰ गी॰) तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत्। स च यो यत्प्रभावश्च
तत्समासेन मे शृणु ॥३॥ ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥४॥

(वेद॰ गी॰) चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते।
तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम् ॥३॥

ऋ॰ अष्ट॰ ८ अध्या॰ ६ व॰ १६ मं॰ ३ मंड॰ १० सू॰ ११४ मं॰ ३

चतुष्कपर्दा इति= चतुष्कपर्दाः चत्वारः ऋग्यजुःसामाथर्वनामानः वेदाः युवतिः तरुणी नित्या सुपेशा शोभनालंकृता घृतप्रतीका दीप्यमानवर्णाऽवयवा एषा ऋषिप्रोक्ता औपनिषदी वाक् वयुनानि क्षेत्रक्षेत्रज्ञज्ञानं वस्ते आच्छादयति। तस्यां वाचि वृषणा= वृषणौ स्वस्वमहत्त्ववर्षितारौ सुपर्णा सुपर्णौ सुपतनौ जायापती क्षेत्रक्षेत्रज्ञौ प्रकृतिपुरुषौ निषेदतुः निषण्णौ स्थितौ भवतः। यत्र "इतराभ्योऽपि दृश्यन्ते" इति तृतीयार्थे त्रल्प्रत्ययः। यत्र यया वाचा देवाः क्षेत्रक्षेत्रज्ञविदः भागधेयम् "स्वार्थिको धेयप्रत्ययः" स्वस्वभागम् अयं भागः प्रकृतेः अयं भागः पुरुषस्य अस्ति इति पृथक् पृथक् भागं धारयन्ति ॥३॥

महाभूतानीति = भवन्तीति भूतानि आकाशादीनि महान्ति च तानि भूतानि, महाभूतानि, अहंकारः महाभूतकारणम् "अहंकारात्पञ्च तन्मात्राण्युद्भवन्ति,, बुद्धिः महत्तत्त्वम् अहंकारकारणम् । अव्यक्तम् = मूलप्रकृतिः न व्यज्यते इत्यव्यक्तम् अव्याकृतं जगद्बीजं त्रिगुणात्मकं परमेश्वर शक्तिः अपरा दशैकम् एकादशसंख्यात्मकानि इन्द्रियाणि चक्षूरसनाघ्राणत्वक्श्रोत्रवाक्पाणिपादपायूपस्थमनांसि इन्द्रियगोचराः रूपरसगन्धस्पर्शशब्दाः पञ्च । इच्छा रागः, द्वेषः मोहजनितपरिणामः सुखं स्वानुकूलवस्तुदर्शनात् सुखम् उपजायते स्वप्रतिकूलवस्तुदर्शनात् दुःखम् उपजायते । संघातः करचरणादि संहतिरूपो देहः, चेतना बुद्धिवृत्तिविशेषः धैर्यम् एतत्सर्वं क्षेत्रमेव सविकार विकारैः विकृतिशीलैः महदादिभिः सह वर्तते इति सविकारं समासेन संक्षेपेण ते तुभ्यम् उदाहृतम् सम्यक् तया कथितमिति ॥५, ६॥

(भ·गी·) महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥५॥ इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः । एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥६॥ "यदा त्वष्टा व्यतृणत् पिता त्वष्टुर्य उत्तरः । गृहं कृत्वा मर्त्यं देवाः पुरुषमाविशन्॥"

(वेद·गी·) प्राणापानौ चक्षुः श्रोत्रमक्षितिश्च क्षितिश्च या । व्यानोदानौ वाङ्मनः शरीरेण त ईयन्ते ॥२६॥ आशिषश्च प्रशिषश्च संशिषो विशिषश्च याः । चित्तानि सर्वे संकल्पाः शरीरमनु प्राविशन् ॥२७॥ या आपो याश्च देवता या विराड् ब्रह्मणा सह । शरीरं ब्रह्म प्राविशच्छरीरेऽधि प्रजापतिः ॥२८॥ सूर्यश्चक्षुर्वातः प्राणं पुरुषस्य वि भेजिरे । अथास्येतरमात्मानं देवाः प्रायच्छन्नग्नये ॥२९॥ अथ· कां· ११ अनु· ४ सू· १० मं· २६ २७ २८ २९

प्राणापानाविति = त्वष्टः मनुष्यमानादिरूपस्य पिता उत्पादकः उत्तरः उत्कृष्टतरः यः त्वष्टा विविधजगन्निर्माता ऽस्ति । स यदा यस्मिन् काले व्यतृणत विविधं चक्षुःश्रोत्रादीनि छिद्राणि पुरुषशरीरे तर्दनेन अकरोत् । तदा मर्त्यं मरणधर्मकं त्वष्टृदेवेन वितृणं बहुच्छिद्रं पुरुषशरीरं गृहं कृत्वा आवासस्थानं कृत्वा देवाः चक्षुरादीनि इन्द्रियाणि प्राणापानौ वायुविशेषौ व्यानोदानौ चक्षुः श्रोत्रम् अक्षितिः अक्षीयमाणं ज्ञानशक्तिः क्षितिः क्षीय

"वर्तेदे इन्द्रे महिमानं अस्य ते वीरा ! शश्वा च संयसं इष्टा आपृणं तीर्थे ! कद्व प्रवोन्द्र होयं पृच्छा प्रविच्छन्ते सुतस्य" ऋ· मं· १० सू· ११ ... पद्धा

" यद्वा देहश्च

प्राण निवासहेतुभूता क्रियाशक्तिः, वाक् वाणी, मनः चित्तम्, आशिषः आशासनानि इष्टफलप्रार्थनानि "आशासः क्वौ" इति वचनात् इत्यम्। प्रशिषः प्रशासनानि संशिषः संशासनानि विशिषः विविधानि शासनानि या एता आशीराद्याः सन्ति। चित्तानि बहुवचनेन मनोबुद्ध्यहंकाराः तथा संकल्पाः सर्वाः अन्तःकरणवृत्तयः। याः आपः याश्च देवताः इन्द्रियाऽभिमानिन्यः याश्च विराड् "विराड् वा इदमग्र आसीत्" इत्यादिना सार्वात्म्येन उक्ता विराड्संज्ञा देवता ब्रह्मणा सह ब्राह्मणतेजसा सह वर्तमानाः ताः सर्वाः शरीरं पुरुषशरीरं क्षेत्रम् अनु प्राविशन्। तदनन्तरं यत् जगत्कारणं परं ब्रह्म तदपि अन्तर्यामिरूपेण तच्छरीरं प्राविशत्। तस्मिन् शरीरे अधि प्रजापतिः प्रजानां पालयिता पुत्राद्युत्पादको जीवः वर्तते। सूर्यः चक्षुरभिमानी देवः। स च पुरुषस्य सम्बन्धि चक्षुरिन्द्रियम् आत्मीयभागत्वेन स्वीकृतवान्। वातः वायुः प्राणं प्राणेन्द्रियम् भागत्वेन स्वीचकार। एवम् न्यान्यपि इन्द्रियाणि पुरुषसंबन्धीनि तत्तदधिदेवता बिभेजिरे विभज्य स्वीकृतवत्यः। अथ अनन्तरं प्राणेन्द्रियव्यतिरिक्तम् आत्मानं षाट्कौषिकं स्थूलशरीरं अग्नये सर्वे देवा भागत्वेन प्रायच्छन्। अग्निना मरणानन्तरं स्थूल शरीरम् एव केवलं दह्यते "ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाण्यपि। वायवः पञ्च, बुद्धिश्च मनः सप्तदशं विदुः" इति यत् सप्तदशात्मकं लिङ्गशरीरं उक्तम्। तस्य मुक्तिपर्यन्तम् विनाशाऽभावात्। तत्तद्देवतारूपेण अवस्थानमेव इत्यर्थः ॥१८।२६।२७।३। चतुर्दशेति = अस्य क्षेत्रस्य (देहस्य) अन्ये भिन्नभिन्नत्वेन स्थिताः चतुर्दश = १ महाभूतानि २ अहंकारः ३ बुद्धिः ४ अव्य~~क्तम् ५ इन्द्रियाणि दश ६ मनः~~ ७ इन्द्रियविषयाः रूपरसादयः ८ इच्छा ९ द्वेषः १० सुखम् ११ दुःखम् १२ एषां संघातश्च १३ चेतना १४ धृतिः एतच्चतुर्दश महिमानः देहविभूतयः देहमहत्त्वस्य वक्तारः सन्ति। धीराः बुद्धिमन्तः ज्ञानिनः तम् देहम् वाचा नाम्ना सप्त = इच्छां १ द्वेषं २ सुखं ३ दुःखम् ४ संघातम् ५ चेतनां ६ धृतिम् ६ प्रयन्ति = प्रकर्षतया प्राप्नुवन्ति परञ्च इह अस्मिन् देहे आत्मानम् सर्वव्यापकम् तीर्थं संसारदुःखात्तारकम् परमात्मानं कः ज्ञानी पुरुषः प्रवोचत् प्रकर्षेण वर्णयति येन पथा येन ज्ञानमार्गेण यद्वा येन मानुषीदेहमार्गेण सुतस्य संसारोत्पादकस्य परमात्मनः ज्ञानरसं प्रपिबन्ते प्रकर्षेण पानं कुर्वन्ति ॥

अमानित्वमिति = अमानित्वम् मानः स्वस्मिन् प्रतिष्ठास्थापनम् सोऽस्यास्तीति मानी, तस्य भावः मानित्वं न मानित्वम् अमानित्वं मानाभाव इत्यर्थः १ अदम्भित्वम् = दुर्गुणं पिधाय स्वमहत्त्वप्रकटनं दम्भः सोऽस्यास्तीति दम्भी तस्य भावः दम्भित्वं न दम्भित्वम् अदम्भित्वम् २ अहिंसा मनोवाक्काय कर्मभिः कस्य अपि अपीडनम् ३ क्षान्तिः आध्यात्मिकाद्युपद्रवसहनम् ४ आर्जवम् सरलत्वम् ५ आचार्योपासनं गुरुशुश्रूषणम् ६ शौचम् बाह्याभ्यन्तर शुद्धिः ७ स्थैर्यं निग्रहीतस्य मनसः स्थिरता ८ आत्मविनिग्रहः = आत्मनः अन्तःकरणस्य विषयध्यानश्रवणादौ प्रवृत्तं प्रवृत्तिप्रतिबन्धः ९ इन्द्रियार्थेषु वैराग्यम् इन्द्रियाणाम् अर्थेषु शब्दादिषु वैराग्यं विरागता अनिच्छा १० अनहंकार एव च। वर्णाश्रमाद्यभिमान शून्यत्वम् ११ जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् = जन्मनि मृत्यौ जरायां वृद्धाऽवस्थायां व्याधौ रोगे दुःखे च पुनः पुनः एषु दोषाणाम् अनुदर्शनम् वीक्षणम् १२ असक्तिः = सक्तिः भोगेषु मनसः रागः तदभावः असक्तिः १३ पुत्रदारगृहादिषु पुत्रे दारेषु गृहे आदिपदात् धनादिषु अनभिष्वङ्गः ममत्वरहितत्वम् १४ इष्टाऽनिष्टोपपत्तिषु इष्टं सुखं तत्साधनञ्च अनिष्टं दुःखं तत्साधनञ्च तेषाम् उपपत्तिषु प्राप्तिषु नित्यं सदा समचित्तत्वम् समानचित्तत्वम् १५ मयि सर्वेश्वरे परमात्मनि अनन्ययोगेन न विद्यते परमेश्वरात् अन्यः आश्रयः यस्येत्यनन्यः योगः भक्तियोगः, अनन्यश्चासौ योगः अनन्ययोगः, तेन अनन्ययोगेन सम्बन्धान्तरशून्येन अव्यभिचारिणी व्यभिचारशून्या परमेश्वरनियता भक्तिः भजनम् १६ विविक्तदेशसेवित्वम् एकान्तदेशवासः १७ जनसंसदि जनानां बहिर्मुखपुरुषाणां संसदि समूहे अरतिः अरुचिः १८ अध्यात्मज्ञाननित्यत्वम् अध्यात्मज्ञाने आत्मानम् अधिकृत्य प्रवृत्तम् अध्यात्मं "ज्ञायते आत्मतत्त्वमनेनेति ज्ञानम् अध्यात्मं तज्ज्ञानं च अध्यात्मज्ञानं वेदान्तशास्त्रं तत्र नित्यत्वं सदाप्रवृत्तित्वम् १९ तत्त्वज्ञानार्थदर्शनम् = तत्त्वज्ञानस्य अर्थः फलस्वरूपः मोक्षः तस्य दर्शनं तत्सिद्धिपद्धत्यवलोकनम् २० एतत् ज्ञानम् अस्तीति प्रोक्तं कथितमस्ति। अतः एतद्विंशतिसाधनेभ्यः अन्यथा विपरीतं यद् अस्ति तत् अज्ञानं भवति॥ ८, ९, १०, ११॥

(मू· गी·) अमानित्वम[1]दम्भित्व[2]महिंसा[3]क्षान्ति[4]रार्जवम्[5]। आचार्योपासनं[6] शौचं[7] स्थैर्य[8]मात्मविनिग्रहः॥८॥ इन्द्रियार्थेषु वैराग्यमनहंकार एव च॥ जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्॥९॥ असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु

नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥१०॥ मयि चानन्ययोगेन
भक्तिरव्यभिचारिणी। विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥११॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ॥ एतज्ज्ञानमिति प्रो
क्तमज्ञानं यदतोऽन्यथा ॥१२॥

(वेदगी॰) पर्शुर्ह नाम मानवी साकं ससूव विंशतिम्। भद्रं भल त्यस्या
अभूद् यस्या उदरमामयद् विश्वस्मादिन्द्र उत्तरः ॥२३॥
अथ॰ कां॰ २० सू॰ १२६ मं॰ २३

पर्शुरिति = पर्शुः स्पृशतेः पर्शुः भवति, ज्ञानस्पर्शकर्त्री विचारकर्त्री पर्शुनाम्ना प्रसिद्धा मानवी मननशीलस्य मनुष्यस्य इयं विचारशक्तिः इति मानवी आत्मनः विचारशक्तिः साकं युगपदेव विंशतिम् = अमानित्वम् १ अदम्भित्वम् २ अहिंसा ३ क्षान्तिः ४ ऋजुता ५ आचार्यसेवा ६ शौचम् ७ स्थैर्यम् ८ आत्मविनिग्रहः ९ इन्द्रियार्थेषु वैराग्यम् १० अहङ्काररहित्यम् ११ जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् १२ असक्तिः १३ पुत्रदारगृहादिषु अनभिष्वङ्गः १४ इष्टानिष्टोपपत्तिषु नित्यं समचित्तत्वम् १५ परमात्मनि अनन्ययोगेन अव्यभिचारिणी भक्तिः १६ विविक्तदेशसेवित्वम् १७ जनसंसदि अरतिः १८ अध्यात्मज्ञाननित्यत्वम् १९ तत्त्वज्ञानार्थदर्शनम् २० एतद्विंशतिसंख्याकं ससूव जनोति उत्पादयति। हे भल! भं ज्ञानं लाति गृह्णातीति भलः तत्संबुद्धौ हे भल! हे ज्ञानिन्! आत्मन्! त्यस्याः पर्शुनाम्न्याः विचारशक्त्याः भद्रं कल्याणम् अभूत् भवति उत्पद्यते। यस्याः विचारशक्त्याः उदरं मध्ये आमयत् देवासुरसंग्रामः सदा क्षोभम् उत्पादयति। विश्वस्मात् सर्वस्मात् इन्द्रः ~~परमेश्वरः~~ उत्तरः उत्कृष्टतरः अस्ति।

मानवप्राणिनः सदसद्विवेकी जीवात्मा

ज्ञेयमिति = मुमुक्षोः पुरुषस्य संसारे यत् ज्ञेयं ज्ञातुं योग्यं वस्तु अस्ति, तत् वस्तु प्रवक्ष्यामि उपदेक्ष्यामि। विद्वान् यद्वस्तु ज्ञात्वा अवबुध्य अमृतं नित्यस्वरूपं परं ब्रह्म अश्नुते प्राप्नोति। किं तद्ब्रह्म अनादिमत् आदिः जन्म यस्यास्तीति आदिमत्, न आदिमत् अनादिमत् जन्मरहितम्। तत् ब्रह्म न सत् एतद् इदम् एतद् इदम् इतिनामरूपात्मकं महदादिकार्यजातं सर्वं सत् उच्यते, तद्ब्रह्म सत् नास्ति अर्थात् महदादिसकलविकारेभ्यः भिन्नम् अस्ति। न च तत् असत् उच्यते सद्विलक्षणम् सर्वजगत्कारणम् अव्यक्तम् इत्यादि नोच्यते ॥१२॥

(मू. गी.) ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते।
अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते ॥१२॥

(वेद गी.) विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक्।
तेषामिष्टानि समिषा मदन्ति यत्रा सप्त ऋषीन् पर एकमाहुः ॥२॥

ऋ. अष्ट. [illegible] अध्या. ३ व. २७ मं. २ (मं. १० सू. ८२ मं. २) यजुः १७।२६ नि. १०।२६ तै. सं. ४।६।२।१

विश्वकर्मेति = विश्वकर्मा विश्वं जगत् एव कर्म कृत्यं यस्य स विश्वकर्मा, यद्वा बहुकर्मा। विमनाः विभूतमनाः "आत्" इत्यनर्थकः। यद्वा आत् सर्वतः विहायाः वस्तुतो महान्। धाता सृष्टिधारकः, विधाता = जगतः कर्ता। परमा परमः सर्वोत्कृष्टः। संदृक् = सम्यक् तया सर्वद्रष्टा। तेषां सप्तर्षीणाम् इन्द्रियाणाम् इष्टानि स्वरूपाणि इषा अन्नेन सह संमदन्ति संमोदन्ते। यत्र ~~[illegible]~~ ज्ञेये तम् परमात्मानं सप्त ऋषीन् सप्तसंख्याकेभ्यः सर्पणस्वभावेभ्यः परं परस्तात् वर्तमानम् इन्द्रियाद्यतीतम् एकं परमात्मानं तत्त्वविदः ज्ञानिनः आहुः कथयन्ति ॥ २ मुंडकोप. मुं. २ खं. १ श्रु. २ "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ह्यप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः"

सर्वत इति= यत् ज्ञेयं ब्रह्म अस्ति, तत् ब्रह्म सर्वतः पाणिपादं सर्वतः पाणयः पादाश्च यस्य तत्सर्वतः पाणिपादम्। सर्वतः अक्षिशिरोमुख म् अक्षीणि चक्षूंषि शिरांसि मुखानि च यस्य, तत्सर्वतोऽक्षिशिरोमुखम्। सर्वतः श्रुतिमत् श्रुतयः श्रोत्राणि यस्य, तत् सर्वतः श्रुतिमत्। लोके लोक्यते इति लोकः प्राणिवर्गः, तस्मिन् लोके इति द्वितीयार्थे सप्तमी। लोकं प्राणिसमुदायं प्रकृतिं प्राकृतञ्च सर्वम् आवृत्य सर्वतः चैतन्येन स्वरूपेण व्याप्य तिष्ठति ॥ १३ ॥

(भू. गी.) सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १४ ॥

(वेद. गी.) यो विश्वचर्षणिरुत विश्वतोमुखो यो विश्वतस्पाणिरुत विश्वत स्पृथः। सं बाहुभ्यां भरति संपतत्रैर्द्यावापृथिवी जनयन् देव एकः ॥ अथ. कां. १३ अनु. २ सू. २ मं. २६

य विश्वत इति= यः परमात्मा विश्वचर्षणिः विश्वस्य सर्वस्य चराचरस्य जगतः चर्षणिः द्रष्टाऽस्ति। यद्वा विश्वे सर्वे चर्षणयो मनुष्याः यस्य वशे वर्तन्ते, तथाभूतः स परमात्मा अस्ति। यः विश्वतोमुखः विश्वतः सर्वतः मुखानि यस्य स विश्वतोमुखः सर्वतोमुखश्चास्ति उत अपि च यः विश्वतस्पाणिः विश्वतः सर्वतः पाणयः हस्ताः यस्य सः विश्वतस्पाणिः। उत अपि च विश्वतस्पृथः विश्वत स्पादः। एवंविधः परमात्मा बाहुभ्यां बाहुवीर्येण दिवं द्युलोकम् संभरति भरतिः पूर्तिकर्मा, सम्यक्तया पूरयति। तथा संपतत्रैः गमनशीलैः पादैः स्वांशैः पृथिवीं पृथिवीलोकं संभरति संपूरयति। एवं द्यावापृथिवी जनयन् दिवं च पृथिवीं च उत्पादयन् देवः द्योतमानः स्वयंप्रकाशः परमेश्वरः एक असहाय एव वर्तते ॥ ६ "सहस्रशीर्षा, ऋ. १०।९।१ "विश्वतश्चक्षुः —" यजुः १७।१९ ऋ. ८।३।१६। यथा कठो. अध्या. २ वल्ली २ श्रु. ११ "सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः", तथा कठो. अध्या. १ वल्ली. २ श्रु. २१ "अशरीरं शरीरेष्व

सर्वेन्द्रियेति = तत् ज्ञेयं ब्रह्म सर्वेन्द्रियगुणाभासं स्वस्वविषयान् शब्दादीन् इन्दयन्ति कोऽयन्तीति इन्द्रियाणि सर्वाणि श्रोत्रादीनि वागा-
दीनि च सर्वैषयिकं मनश्च एतेषामिन्द्रियाणां गुणा अवभास्यन्ते येन तत् सर्वेन्द्रियगुणाभासम् यद्वा सर्वेन्द्रियगुणैः श्रवणा-
दिभिः अवभासते इति सर्वेन्द्रियगुणाभासम्। सर्वेन्द्रियविवर्जितं सर्वैः इन्द्रियैः तत्कृतैः पुण्यपापादिभिश्च वर्जितं रहितम्
प्राकृतिकदेहेन्द्रियसंबन्धशून्यम्। असक्तम् = असङ्गम्। सर्वभृत् सर्वम् अव्यक्तादिस्थूलान्तं बिभर्तीति सर्वभृत् सर्वा-
धार। निर्गुणं प्राकृतगुणशून्यम्। गुणभोक्तृ गुणानां सत्वादिगुणोत्पन्नानां सुखदुःखदीनां भोक्तृ अस्ति ॥१४॥

(मू. गी.) सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥१४॥

(वेद गी.) यो विश्वचर्षणिरुत — ,, पूर्वपृष्ठे संख्यांकमतेलिं

नवस्थेष्ववस्थितम् ,, तथा कठो. अध्या-१ वल्ली-३ श्रु.१५ अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ,, तथा मुंडको. मुंड-२ खं-२
श्रु-११ ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म दक्षिणतश्चोत्तरेण। अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ,,

बहिरिति = हे अर्जुन! तद्ब्रह्म भूतानां वस्तुमात्राणां बहिः अन्तः मध्ये चास्ति। तदेव अचरं स्थिरं तदेव चरं जंगमं चास्ति। तत् दूरस्थम् अविवेकिपुरुषेभ्यः दूरेऽस्ति। तदेव ज्ञानिपुरुषस्य अन्तिके समीपे अस्ति ॥१५॥

(मू.गी.) बहिरन्तश्च भूतानामचरं चरमेव च।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥१६॥

(वेदगी.) तदेजति तन्नैजति तद्दूरे तद्वन्तिके।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥५
यजुः ४०।५

तदेजतीति = तद् ज्ञेयं ब्रह्म एजति कम्पते मूढदृष्ट्या। तत् एव सर्वप्राणिरूपेण अवस्थितं सत् एजति चलति। तद् ब्रह्म चरमस्तीत्यर्थः। तत् न एजति स्थावररूपाऽवस्थितं सत् न चलति तदेव अचरमित्यर्थः। तत् ब्रह्म दूरे अविवेकिपुरुषेभ्यः दूरेऽस्ति। तदु तदेव ब्रह्म अन्तिके ज्ञानिपुरुषाणाम् समीपे अस्ति। तद् ब्रह्म अस्य सर्वस्य जगतः प्राणिजातस्य वा अन्तः मध्येऽन्तर्यामिरूपतयाऽवस्थितमस्ति। तत् एव ~~ब्रह्म~~ ब्रह्म अस्य सर्वस्य चराचरजगतः बाह्यतः बहिरपि अवस्थितमस्ति चेतनाचेतनरूपम् अनन्तं सर्वगं ब्रह्मेत्यर्थः ॥५॥ यथा मुंडके मुंड.२ खं.२ श्रु.५ "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः तमेवैकं जानथ, अन्या वाचो विमुञ्चथामृतस्यैष सेतुः" "स बाह्याभ्यन्तरो ह्यजः", तथा ऐतरेयोप. अध्या.३ श्रु.३ एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि, पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जंगमञ्च पतत्रि च यच्च स्थावरं सर्वं तत्....... ", तथा च "दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम्"

अविभक्तमिति = भूतेषु ब्रह्मादिस्तम्बान्तेषु व्याप्यत्वादपि अविभक्तं भिन्नं भिन्नं विभक्तं [illegible] निरवयवत्वात् यद्वा भूतेषु भूतैः अविभक्तं विभक्तुं न शक्यमस्ति। ब्रह्मादिस्तम्बान्तेषु विभक्तमिव विभक्ततां प्राप्तमिव स्थितं न [illegible] विभक्तं [illegible] तत्र भूतभर्तृ व्योमादिभूतानां भर्तृ पालकं धारकं चास्ति। तदेव ज्ञेयं ब्रह्म ग्रसिष्णु स्वात्मना ग्रसितुं स्वस्मिन्नेव निरोद्धुं शीलमस्यास्तीति ग्रसिष्णु ग्रसनशीलमस्ति। तदेव ब्रह्म प्रभविष्णु उत्पादकमस्ति ॥१६॥

(मू॰ गी॰) अविभक्तं च भूतेषु विभक्तमिव च स्थितम्।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥१६॥

(वेद गी॰) वेनस्तत्पश्यन्निहितं गुहा सद्यत्र विश्वं भवत्येकनीडम्।
तस्मिन्निदं सं च वि चैति सर्वं स ओतः प्रोतश्च विभुः प्रजासु ॥८॥

यजुः ३२।८

वेन इति = वेनः पण्डितः विदितवेदान्तरहस्यः "मत्सः धीरः" वेनः = इति मेधाविनामसु पाठः (निघं॰ ३।१५) सद्भावनया तत् = ब्रह्म पश्यत् पश्यति। किं तत् = भूतेषु अविभक्तम्। यत्र यस्मिन् ब्रह्मणि विश्वं चराचरं जगत् एकनीडम् एकस्थानस्थम् अविभक्तं भवति तत् ब्रह्म गुहा गुहायां बुद्धौ गुप्ते कारणे वा सत् निहितं स्थितम् नित्यं वर्तमानमपि विभक्तमिव भवति। तस्मिन् परमात्मनि इदं विकारजातं सर्वं चराचरं जगत् समेति उपसंहृतिकाले ग्रासमात्रं भवति। अनेन ब्रह्म ग्रसिष्णु अस्ति। समेति च वि + एति = व्येति। सृष्टिकाले सर्वमेव जगत् उद्भवति अनेन ब्रह्म प्रभविष्णु अस्ति। स च परमेश्वरः विभुः विभवति कार्यकारणभावेनेति विभुः = विविधप्रकारेण व्याप्तः सन् प्रजासु सृष्टिषु ओतः शरीरभावेन, प्रोतश्च चेतनभावेन अनेन ब्रह्म भूतभर्तृ अस्ति ॥ ८ ॥ यथा चोपनिषदि "अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो ~~[illegible]~~ बभूव। एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च" तथा प्रश्नो॰ प्र॰ ४ श्रु॰ ९ "एष हि द्रष्टा स्प्रष्टा श्रोता, घ्राता रसयिता, मन्ता बोद्धा, कर्ता, विज्ञानात्मा पुरुषः"

ज्योतिषामिति = तद्ब्रह्म ज्योतिषां प्रकाशकर्तॄणाम् आदित्यादीनाम् अपि ज्योतिः प्रकाशकम् अस्ति अत एव तद्ब्रह्म तमसः अन्धकारात् अज्ञानाद्वा परं दूरतरम् उच्यते कथ्यते। ज्ञानं तद्ब्रह्म स्वप्रकाशं सर्वप्रकाशकं यतिना ज्ञेयं यत्। तत् ज्ञानं ब्रह्म अस्ति ज्ञानगम्यं ज्ञानेन गम्यं प्राप्यं ज्ञेयम् अधिगम्यं ब्रह्म अस्ति। यत् ब्रह्म सर्वस्य वस्तुप्राणिमात्रस्य हृदि स्थितम् अस्ति॥

(भ. गी.) ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम्॥ १८॥

(वे. गी.) इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत्।
विश्वभ्राड् भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतम्॥ २

साम. उत्त. अध्या. १३ खं. ३ मं. २ ऋ. मं. १०. सू. १७०. मं. ३

इदमिति = इदं ब्रह्म श्रेष्ठं प्रशस्यतमं ज्योतिषां प्रकाशकर्तॄणाम् आदित्यादीनाम् अपि ज्योतिः प्रकाशकमस्ति। अत एव उत्तमम् उत्कृष्टम् अस्ति। तत् ब्रह्म विश्वजित् विश्वस्य सर्वस्य जेतृ जयशीलम् अस्ति। अतः तमसः परम् अस्ति। धनजित् धिनोति तर्पयति सर्वान् इति धनम् (धि. स्वादि = प) धनं तृप्तिकर्तॄन् अपि जयतीति धनजित् तृप्तिकर्तॄणाम् अपि तृप्तिकृत् अस्ति तत् तृप्तानम् एवास्ति। बृहत् प्रभूततरं तद् ब्रह्म उच्यते कथ्यते। अपि च तदेव ब्रह्म विश्वभ्राट् विश्वस्य प्रकाशयितृ तद्ब्रह्म विभ्राजमानमित्यर्थः। भ्राजः प्रकाशस्वरूपं महि महत् सूर्यः सरति सर्वत्र व्याप्नोतीति सूर्यः। यद्वा सुवति प्रेरयति सर्वं जगत् स्वशक्त्या इति सूर्यः ब्रह्म दृशे द्रष्टुम् उरु विस्तीर्णं तमसोऽभिभवितृ अच्युतम् च्युतिरहितम् अविनश्वरम् ओजः तेजोरूपं बलस्वरूपं वा पप्रथे जगति प्रसृतमस्ति॥ २॥ मन्त्रान्तरे च "ज्योतिरसि विश्वरूपं विश्वेषां देवानाᳪ समित्" यजुः ५।३५ यथा चोपनिषदि "तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः" यथा च मुण्डकोपनिषदि "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" तथा बृहदा. अध्या. ३ ब्रा. ७ श्रु. १४ "यस्तेजसि तिष्ठंस्तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" तथा बृहदा. अध्या. ३ श्रु. ९ य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" "तद्देवा ज्योतिषां ज्योतिः" बृहदारण्यको. ४।४।१६

* आनं सदाताऽसि

४४८

इति क्षेत्रमिति = हे अर्जुन! इत्येवं प्रकारेण समासतः संक्षेपतः क्षेत्रं शरीरं तथा ज्ञानं श्रवणमननादि मानित्वादिलक्षणं तथा ज्ञेयं ज्ञातुम् योग्यं वस्तु परं ब्रह्म उक्तं प्रतिपादितम्। मद्भक्तः मद्भजनकर्ता मुमुक्षुः विद्वान् एतत् क्षेत्रक्षेत्रज्ञयोः स्वरूपं विज्ञाय सम्यग् विविच्य मद्भावाय मद्भावः कैवल्यम् उपपद्यते प्राप्नोति ॥१८॥

(मू.गी.) इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥

(वेदगी) तस्माद् वै विद्वान् पुरुषमिदं ब्रह्मेति मन्यते।
सर्वा ह्यस्मिन् देवता गावो गोष्ठ इवासते ॥ ३२ ॥
अथ॰ कां॰ ११ अनु॰ ४ सू॰ ९ मं॰ ३२

तस्मादिति = शरीरतज्ज्ञानप्रतिपादनकारणात् मुमुक्षुः मद्भक्तः इदं सर्वं क्षेत्रं, ज्ञानं, ज्ञेयं विद्वान् सम्यक्तया जानन् पुरुषम् इदम् अपरोक्षम् पुरुषशरीरं व्याप्य अवस्थितम् ब्रह्म इत्येवंप्रकारेण मन्यते जानाति। हि यस्मात् कारणात् सर्वाः देवताः प्राणापानादिवायवः सर्वेन्द्रियाणि तदधिष्ठातारः सूर्यादयः अस्मिन् ~~शरीरे~~ शरीरे आसते निवसन्ति। तत्र दृष्टान्तः। गावः गोष्ठ इव = यथा गावः स्वकीये गोष्ठे स्वकीये स्थाने विस्रम्भेण निवसन्ति। तस्मात् सर्वाभिः देवताभिः आश्रितम् अन्तर्यामिरूपेण जीवरूपेण च ब्रह्मणा प्रविष्टं पुरुषशरीरं ~~पश्यति~~ पश्यति ॥ ३२

प्रकृतिमिति = प्रकृतिं त्रिगुणात्मिकाम् ईश्वरशक्तिं मायां चैव तथैव पुरुषं क्षेत्रज्ञम्, तौ उभौ प्रकृतिपुरुषौ अपि अनादी कारणरहितौ विद्धि जानीहि । तथा विकारान् देहेन्द्रियप्राणमनोबुद्ध्यादीन् सर्वान् विकारान् तथा गुणान् सुखदुःखादीन् प्रकृतिसंभवान् प्रकृतिसकाशादुत्पन्नान् विद्धि जानीहि ॥ २० ॥

(मू. गी.) प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ २० ॥

(वेद गी.) बालादेकमणीयस्कमुतैकं नेव दृश्यते ।
ततः परिष्वजीयसी देवता सा मम प्रिया ॥ अथ. कां. १०. सू. ८ मं. २५

(यद्वा) सनातनमेनमाहुरुताद्य स्यात् पुनर्णवः ।
अहोरात्रे प्रजायेते अन्यो अन्यस्य रूपयोः ॥ अथ. कां. १०. सू. ८ मं. २३

बालादिति = एकं वस्तु बालात् केशात् अपि अणीयस्कम् अतिशयेन सूक्ष्मम् अस्ति । उत अपि च एकं न इव नास्तिवत् दृश्यते प्रतीयते एषा प्रकृतिः अस्ति । ततः तस्मात् अपि सूक्ष्मतरम् वस्तु परिष्वजीयसी प्रकृतिमध्ये व्याप्तरूपेण स्थिता देवता देवत्वं प्रकाशत्वम् अस्ति । सा देवता मे मम प्रिया इति ॥ २५ यद्वा "बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते, श्वेताश्व. ५ । ८" "बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः," श्वे. ५ । ८
सनातनमिति = एनं पुरुषं सनातनं सदाभवः सनातनः तं सनातनं नित्यम् आहुः कथयन्ति । उत अपि अद्य पुनर्णवः पुनर्नूतनः अस्ति । अहोरात्रे दिवानिशं यद्वा ज्ञानाज्ञाने प्रकृतिपुरुषौ प्रजायेते उत्पद्येते । तथा अन्यः एकः अन्यस्य अपरस्य रूपयोः सदृशमस्ति । एवं प्रकृतिपुरुषौ अपि सदृशौ नित्यौ स्तः । २३ ॥ यथा श्वेताश्व. अध्या. ४ श्रु. ५ "अजामेकां लोहितकृष्णशुक्लां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥"
"न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । कठो. २ । ६ । ९" "नैव वाचा न तपसा प्राप्तुं शक्यो न चक्षुषा । अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते," कठो. २ । ६ । १२ 

"दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः"

[illegible]

कार्यकारणेति= कार्यं शरीरं कारणम् इन्द्रियमनोबुद्ध्यहंकारचित्तानि तेषां कर्तृत्वे जनकत्वे हेतुः उपादानकारणं प्रकृतिः एव उच्यते विद्वद्भिः कथ्यते। पुरुषः पुरि शयनात् पुरा सदैकरूपेणास्ते इति वा स्वाऽज्ञानात् परमुषतीति वा पुरुषः जीवात्मा सुखदुःखानां सुखदुःखादिप्रत्ययानां भोग्यानां भोक्तृत्वे उपलब्धृत्वे हेतुः सुखदुःखादिप्रत्ययाऽनुभवकारणम् उच्यते कथ्यते ॥ २१॥

(मू॰गी॰) कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २१॥
(वेदगी॰) यस्मिन् वृक्षे सुपलाशे देवैः संपिबते यमः।
अत्रा नो विश्पतिः पिता पुराणान् अनुवेनति ॥
अथ॰ ऋ॰ मं॰ १०॰ सू॰ १३५ मं॰ १ अथ॰ कां॰ १० सू॰ ८ मं॰ 'यत्र' इदं यमस्य सादनं देवमानं यदुच्यते। इयमस्य धमते नाडीरयं गीर्भिः परिष्कृतः" ऋ॰ मं॰ १० सू॰ १३५ मं॰ ७

यस्मिन्निति= यस्मिन् सुपलाशे इन्द्रियमनोबुद्ध्यहंकारचित्तसामग्रीपर्णोपेते वृक्षे शरीरे संसारे वा यमः इन्द्रियादिनियमनकर्ता (जीवात्मा) देवैः इन्द्रियैः संपिबते सुखदुःखानि उपभुंक्ते। अत्र क्षेत्रे चिरं निवसतः पुराणान् पुरातनवासिनः नोऽस्मान् जीवान् अनुवेनति अनुकूलं करोति ॥ २२॥ यद्बुद्धि नमन्यते प्रायः सर्वेषु इन्द्रियेषु इदं क्षेत्रं यमसदनं जीवात्मगृहमस्ति। यदेतद्गृहं शरीरं देवमानं परमात्मनिर्बोधं। [illegible] तथा वाणीस्तब्धे सति मूकेषु सत्सु देहे गीर्भिः वाणीमात्रेण जीवात्मा परिष्कृतः सिद्धः प्रतीयते। देहे ऽपि सर्वेन्द्रिये देहे स्थाने मनः अकिंचन इयं नाडी प्राणनाडी धमते तदाऽपि प्रतीयते जीवात्मा मूकेषु जीवात्मा देहान्तः पृथग्भूत इति ज्ञायते। ७॥

पुरुषः इति = पुरुषः जीवात्मा प्रकृतिस्थः कार्यकारणसंघातस्थितः प्रकृतिजान् गुणान् स्थूलसूक्ष्मकारणदेहधर्मान् स्वीयत्वेन भुंक्ते भुनक्ति। अस्य आत्मनः गुणसंगः गुणेषु दृष्टाऽदृष्टेषु भोग्येषु प्राकृतगुणेषु सज्यते पुमान् सक्तो भवतीत्यनेन सङ्गः कामः सदसद्योनिजन्मसु अर्थाऽऽक्व योनि[redacted] जन्मसु कारणं हेतुः भवति ॥२१॥

(मू. गी.) पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणान्।
कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु ॥२१॥

(वेदगी.) अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येनासयोनिः।
ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न नि चि-
क्युरन्यम् ॥ ऋ. अष्ट. २ अध्या. ३ व. २१ मं. ३८ (मंड. १ सू. १६४ मं. ३८)

अपाङ्-इति = अमर्त्यः अमरणधर्मा अयमात्मा पुरुषः मर्त्येन मर्त्यधर्मेण देहेन प्रकृत्या इतिभावः। सयोनिः समानस्थानत्रयपरिच्छेदको देहोऽस्ति। तत्र सर्वत्र सोऽयमपि तिष्ठतीत्यर्थः देहस्य इतिभावः। यद्वा सयोनिः समानोत्पत्तिः सहवासेन स्वामिभृत्यतिष्ठ पचर्यते। एवंभूतः सन् स्वधया अन्नोपलक्षिततत्तद्भोगेन गृभीतः गृहीतः यद्वा स्वधाशब्देन अन्नमयं शरीरं लक्ष्यते तेन गृहीतः सन् अपाङ् अशुभं कर्म कृत्वाऽधोगच्छति। प्राङेति ऊर्ध्वं स्वर्गादिलोकं प्राप्नोति। सदसद्योनिषु प्राप्नोतीत्यर्थः। नित्यः जीवः सूक्ष्मशरीरोपाधिकः सन् नानाविधं कर्म कृत्वा तत्तद्भोगाय तत्तज्जन्म लब्ध्वा शरीरत्रयेण संबद्धो लोकलोकान्तरेषु सञ्चरति। स्थूलसूक्ष्मोभयशरीरपरिग्रहेण लोके गुणत्रयान्वितः सन् परिभ्रमति। तथा च श्रूयते "गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता। स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति स्वकर्मभिः" ता = तौ प्रकृतिपुरुषौ शश्वन्ता शश्वन्तौ अविभागेन सर्वदा वर्तमानौ अनादी विषूचीना = विषूचीनौ सर्वत्रगमनौ वियन्ता = वियन्तौ तत्तत्फलोपभोगाय सर्वत्र लोकान्तरेषु गच्छन्तौ वर्तेते। विवेकिनः पुरुषाः अन्यं भूतात्मानं प्रकृतिम् इत्यर्थः। निचिक्युः नितरां विशेषेण विकृतिमन्तौ पश्यन्ति जानन्ति। अन्ये मूढाः पुरुषाः अन्यम् अपरं देहव्यतिरिक्तं न निचिक्युः न जानन्ति। केचन पामराः देहव्यतिरिक्तम् अन्यत् किञ्चिन्न जानन्ति। केचन विवेकिनः कृतभोक्तृत्वोपेतो देहातिरिक्तः कश्चिदन्योऽस्तीति अनुमिन्वते॥ २८

पुरुषप्रकृत्यः अध्या. १ श्लो. २२ "द्विपत्तद्धेतोऽस्मत्रो देहं मन्द्रेन पुरुषोमनक्. अद्वैत नहीं तयोः सविज्ञानसहज प्रभुः" तथा बृहदा. अध्या. १ का. ४ श्रु. ३ स द्वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत्, स हैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ स इममेवात्मानं द्वेधापातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यत एव तां समभवत्ततो मनुष्या अजायन्त"

उपद्रष्टेति = अस्मिन् देहे कार्यकारणसंघाते पुरुषः परमात्मा परः देहेन्द्रियादिभ्यः भिन्न एवाऽस्ति। स च उपद्रष्टा साक्षित्वेन पश्यति उपद्रष्टाऽस्ति उपद्रष्टा द्रष्टव्येभ्यः भिन्नः भवति "साक्षी चेताः केवलो निर्गुणश्च" अनेन वेदान्तदर्शनसिद्धान्तः सिद्धः। अनुमन्ता बुद्ध्यादीनां प्रवृत्तिनिवृत्तितत्फलज्ञाताऽस्ति अयं प्रकृतिकार्यसमर्थकः सांख्यसिद्धान्तोऽस्ति। स च भर्ता महदादिसर्वविकारान् सत्तास्फूर्तिप्रदानेन बिभर्तीति भर्ता, अयं कर्मफलसंग्रही न्यायदर्शनसिद्धान्तः। भोक्ता स्वस्मिन् अव्यक्तादिस्थूलान्तं सर्वं स्वशक्त्या भुंक्ते स्वस्मिन्नेव तिरोभवतीति भोक्ता, शरीरमेवात्मा चार्वाकसिद्धान्तं भोक्तृशब्दः प्रतिपादयति। महेश्वरः = महान् चासौ ईश्वरः महेश्वरः अव्यक्तादपि महान्। अयम् ईश्वरजीवैकत्वसम्पादकः सिद्धान्तः। परमात्मा सोऽयमात्मा देहादिभ्यः भिन्नः सन् परमात्मा अस्ति अतः परमात्मा ब्रह्मैवास्ति। ब्रह्मात्मैकत्वसम्पादकोऽयं सिद्धान्तः। २२

(मू·गी·) उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥२२॥

(वेदगी·) हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसद्
ऋतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥ यजुः १०·२४
ऋ· अष्ट· ३ अध्या· ७ व· १४ मं· ५ (मंड· ४ सू· ४० मं· ५)

हंस इति = स च परमात्मा हंसः "हन्ति: गत्यर्थः" सर्वत्र सर्वदा गन्ता सर्वप्राणिनां हृदि चिद्रूपः स्थितः। यद्वा सेहन्ति सर्वान् पदार्थान् इति हंसः उपद्रष्टा इति भावः। शुचिषद् = शुचिषु बुद्ध्यादिषु पदार्थेषु सीदतीति शुचिषद् बुद्ध्यादीनां प्रवृत्तिनिवृत्तितत्फलानुमंताऽस्ति। वसुः सर्वस्य वासयिता। अन्तरिक्षसद् अन्तरिक्षे आकाशे हृदये सीदतीति अन्तरिक्षसद् सर्वान्तर्यामी अस्ति। होता दाता सर्वपदार्थशक्तिप्रदाता यद्वा देवानां वस्वादित्रयस्त्रिंशद्देवानां स्वशक्त्या आह्वाताऽस्ति। अतिथिः अतिथिवत्सर्वदा पूज्यः। दुरोणसद् = दुरोण इति गृह नाम (निघं· ३।४) दुरोणे गृहे पिण्डे सीदतीति दुरोणसद् सर्वव्यापीत्यर्थः। नृषद् नृषु मनुष्येषु चैतन्यरूपेण सीदतीति नृषद्। वरसत् = वरणीये मण्डले सीदतीति वरसत् भक्तवत्सलः। ऋतसद = ऋतेषु प्रकृत्यादिपदार्थेषु सीदतीति ऋतसद महतो महीयान्। व्योमसद सूक्ष्मात् सूक्ष्मतरे आकाशे सीदतीति व्योमसद अणोरणीयान्। अब्जाः यो अपो जनयतीति अब्जाः। गोजाः = गाः पृथिव्यादीन् जनयतीति गोजाः ऋतजाः = ऋतं सत्यं जनयतीति ऋतजाः। अद्रिजाः मेघपर्वतवृक्षादीन् जनयतीति अद्रिजाः। ऋतं सत्यम् अबाध्यं सर्वाऽधिष्ठानं ब्रह्म बृहत् सर्वतो वृहत्तमम् अस्तीति अतः परमात्मा देहादिपदार्थेभ्यः परः भिन्नः अस्तीति ॥२४॥ प्रश्नोप· प्र· ४ श्रु· ९

"एष हि द्रष्टा, स्प्रष्टा, श्रोता, घ्राता, रसयिता, मन्ता, बोद्धा, कर्ता, विज्ञानात्मा पुरुषः" तथा च "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" ४५२

एवमिति= यः मुमुक्षुः पुरुषं क्षेत्रज्ञं चिदेकरसं परमात्मानं, प्रकृतिं क्षेत्रं गुणैः सह महदादिस्थूलान्तैः गुणकार्यैः सह एवम् इत्थम् कार्यकारणकर्तृत्वहेतुः प्रकृतिः अस्ति । सुखदुःखभोक्तृत्वहेतुः पुरुषः अस्तीत्येवंरूपेण वेत्ति जानाति । स विवेकी पुरुषः सर्वथा सर्वप्रकारेण संसारे वर्तमानोऽपि वसन्नपि भूयः पुनः न अभिजायते कर्मफलोपभोगाय जन्म न धारयति ॥ २४

(मू॰ गी॰) य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २४ ॥

(वेदगी॰) उभावन्तौ समर्षसि वत्सः संमातराविव ।
नन्वेतदितः पुरा ब्रह्म देवा अमी विदुः ॥ १३ ॥
अथ॰ कां॰ १३ अनु॰ २ सू॰ २ मं॰ १३

उभाविति= वत्सः शिशुः मातरौ मातापितरौ इव सम समत्वेन जानाति । तथा हे मुमुक्षो ! त्वम् अन्तौ जगतः सिद्धान्तस्वरूपौ उभौ प्रकृतिपुरुषौ (प्रकृतिपुरुषौ) समर्षसि सम्यक्तया जानासि । ननु निश्चयोऽस्ति । एतत् (एतत्) ध्येयस्वरूपं ~~पुरुषोत्तमम्~~ (ब्रह्म) इतः प्रकृतिपुरुषज्ञानात् पुरा पूर्वम् अपि ~~अमी देवाः अमी ज्ञानिनः पुरुषाः~~ (अमी देवाः ज्ञानिनः पुरुषाः) ब्रह्म परमेश्वरं विदुः जानन्ति साक्षात् कुर्वन्ति ॥ १३

मुंडको॰ मुं॰ २ खं॰ २ श्रु॰ ८ (२।२।८) "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे," तथा मुंड॰ ३ खं॰ १ श्रु॰ ३ "तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति," छान्दो॰ प्र॰ ६ खं॰ १४ श्रु॰ २ "एवमेवेहाचार्यवान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति," तथा छान्दो॰ अध्या॰ ५ खं॰ २४ श्रु॰ ३ "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते,"

ध्यानेनेति = केचित् यतयः ध्यानेन एकाग्रेण मनसा आत्मनि बुद्ध्याम् आत्मानं परमात्मानम् आत्मना स्वस्वरूपत्वेन पश्यन्ति निरीक्षन्ते। अन्ये अपरे मुमुक्षवः सांख्येन योगेन प्रकृतिः अन्या, पुरुषश्चान्यः इति संसारमोक्षोपायत्वेन सांख्येन योगेन आत्मनि बुद्धौ आत्मानं परमानं पश्यन्ति। अपरे सांख्ययोगानधिकारिणः गृहस्थाः कर्मयोगेन "नित्यनैमित्तिककर्मोऽनुष्ठाने कर्मयोगः" चित्तशुद्धिसम्पादनकारणेन परमेश्वरार्पणबुद्ध्या निष्कामकर्मोऽनुष्ठानयोगेन आत्मनि आत्मानं पश्यन्ति। अन्ये तु एतद्व्यतिरिक्ताः पामराः स्त्रीशूद्रादयः तु अजानन्तः पूर्वोक्तं किमपि साधनम् अजानन्तः अन्येभ्यः ब्राह्मणेभ्यः सदसद्विवेकिगुरुभ्यो वा एतत्कर्म एवं कुरु इदं कर्म इत्थं कुरु इति श्रुत्वा आकर्ण्य आत्मानम् उपासते। तेऽपि श्रुतिपरायणाः श्रुतार्थैकप्रवणाः सन्तः मृत्युं मृत्युदुःखप्रधानं संसारसागरम् अतितरन्ति एव उल्लंघयन्त्येव। २४; २५॥

(मू·गी·) ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना। अन्ये सांख्येन योगेन
कर्मयोगेन चापरे॥२४॥ अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः॥२५॥

(वेद·गी·) त्रिभिः पवित्रैरपुपोद्ध्यर्कं हृदा मतिं ज्योतिरनु प्रजानन्।
वर्षिष्ठं रत्नमकृत स्वधाभिरादिद्द्यावापृथिवी पर्यपश्यत्॥८॥
शतधारमुत्समक्षीयमाणं विपश्चितं पितरं वक्त्वानाम्।
मेळिं मदन्तं पित्रोरुपस्थे तं रोदसी पिपृतं सत्यवाचम्॥९॥
ऋ· अष्ट· ३ अध्या· १ व· २८ मं· ८, ९ (मंड· ३ अनु· २ सू· २६ मं· ८, ९)

त्रिभिरिति = पवित्रैः ध्यानयोगेन सांख्ययोगेन कर्मयोगेन पावनभूतैः त्रिभिः ध्यानसांख्यकर्मयोगिभिः उत्तममध्यमाऽधमैः अर्कम् अर्चनीयम् निरतिशयानन्दलक्षणं हृदा अन्तःकरणवृत्त्या मतिं सर्वैः मननीयं ज्योतिः प्रकाशस्वरूपं परब्रह्मतेजः अनु प्रजानन् श्रवणमननादिक्रमेण प्रकर्षेण संशयविपर्यासभावनाबुद्धिनिरासेन स्वात्मरूपतया जानानः मुमुक्षुः पुरुषः;*

× अपुपोत् हीति निश्चये। अवश्यमेव निर्मलतां प्राप्नोति, कैवल्यमधिगच्छतीत्यर्थः। एवं जानानः मुमुक्षुः पुरुषः स्वधाभिः स्वेन आत्मना ब्रह्मस्वरूपधारणशीलाभिः बुद्धिवृत्तिभिः रत्नं रमणीयं वर्षिष्ठं सर्वेभ्यः श्रेष्ठम् आत्मानम् अकृत करोति। आदित् = अनन्तरमेव आत्मस्वरूपे विज्ञाते सति द्यावापृथिवी द्यावापृथिव्यौ तदुपलक्षितं सर्वं जगत् पर्यपश्यत् परितः सर्वतः स्वात्मतया पश्यति। आत्मनि विज्ञाते सर्वं विज्ञातमिति वचनात् ॥ "शतधारमिति = हे रोदसी द्यावापृथिव्यौ तदुपलक्षितं ~~सर्वं जगत्~~। द्यावापृथिव्यन्तर्वर्तिन् ज्ञानध्यानाऽनुष्ठानाशक्त! शिष्य! शतधारं शतशः ज्ञानोपदेशधारायुक्तम् अक्षीयमाणं न कदाऽपि विच्छिन्नप्रवाहम् उत्सम् कूपोपममेतत् सततप्रवाहोपेतम् स्रोत इवाऽविच्छिन्नवाक्सरणीसमेतम् विपश्चितं मेधाविनं सकलशास्त्रज्ञं पितरं शिष्याणां विद्योपदेशेन पालयितारं वक्त्वानां वाक्यानाम् वेदान्तवाक्यानां मेलिं मेलकं नानाशाखागतानाम् वाक्यानाम् एकस्मिन्नर्थे संकलय्य वक्तारं पित्रोः द्यावापृथिव्योः उपस्थे समीपे मदन्तं ज्ञानाऽतिशयेन हृष्यन्तम् अत एव सत्यवाचं सत्ये परब्रह्मणि वाक् यस्य, तथाभूतं सत्यवाचं परं ब्रह्मणः "ओं तत्सद्ब्रह्म,, इतिवादनपरं यद्वा सत्यवादिनं तम् इमम् वेदान्तवाक्योपदेष्टारं गुरुं पिपृतम् अपेक्षितसेवाभावेन संपूर्णं कुरुतम्। यद्वा तदाज्ञां पालयतम्।

पवित्रैः = पूञ् पवने "कर्तरि चर्षिदेवतयोः,, इति देवतायाम् अभिधेयायां कर्तरि इत्रप्रत्ययः पुनन्तीति पवित्राः। अपुपोत् = पूञ् पवने इत्यस्य यङ्लुगन्तस्य रूपम् संज्ञापूर्वकस्य विधेः अनित्यत्वात् अभ्यासस्य गुणाभावः। अर्कम् = अर्च पूजायां कृदाधारार्चिकलिभ्यः क इति कप्रत्ययः। अर्कः = जगत्स्रष्टा सोऽर्चन्नचरत् आपो अजायन्त अर्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वम्। हृदा = हृदयशब्दस्य "पद्दन्नो—,, इत्यादिना हृदादेशः। मतिम् = मन ज्ञाने इत्यस्मात् "मंत्रे वृषेषपचे त्यादिना कर्मणि क्तिन् प्रत्ययः। अकृत = करोतेर्लुङि सिच् तस्य ह्रस्वादङ्गात्,, इति लोपः। उत्सम् = उनत्तीति उत्सः "उन्दी क्लेदने,, अमोदुन्धामिगृधि कुत्रिभ्यः किद्वेति प्रत्ययः। कित्वान्नकारलोपः। विपश्चितम् = विशेषेण पातीति विपा वाक्। विपो वाचः चिनोतीति क्विप्, ह्रस्वस्य पिति कृति तुक्,, "तत्पुरुषे कृति बहुलम् इति वचनात् द्वितीया अलुक् कृदुत्तरपदस्वरः। वक्त्वानाम् = वच परिभाषणे,, अस्मात् कृत्यार्थे तवैकेन्केन्यत्वन,, इति त्वन प्रत्ययः। "चोः कुः, इति कुत्वम्। मेलिम् = मिलिः संपर्के,, अस्मादौणादिक इप्रत्ययः। पिपृतम् = पृ पालन पूरणयोः। छान्दसो जुहोत्यादि "अर्तिपिपर्त्योश्च,, इत्यभ्यासस्य इत्वम् ॥ २ ॥

यावदिति = हे भरतर्षभ! हे अर्जुन! स्थावरजंगमं चराचरं यावत् = यावत्परिमाणमात्रं यत्किञ्चित् सत्वं प्राणिमात्रं संजायते उत्पद्यते। तत्सर्वं क्षेत्रक्षेत्रज्ञसंयोगात् क्षेत्रं प्रकृतिः क्षेत्रज्ञः पुरुषः तयोः संयोगः सम्बन्धः तस्मात् क्षेत्रक्षेत्रज्ञसंयोगात् प्रकृतिपुरुषसंबन्धात् संजायते इति विद्धि त्वं जानीहि ॥२६॥

(मू.गी.) यावत्संजायते किञ्चित् सत्वं स्थावरजंगमम्।
क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ॥२६॥

(वेदगी.) प्रथमेन प्रमारेण त्रेधा विष्वङ् विगच्छति।
अद एकेन गच्छत्यद एकेन गच्छतीहैकेन निषेवते ॥ अथ.११।८।३३
कां. सू. मं.

प्रथमेनेति = (त्रेधा) सत्वरजस्तमोगुणानां सम्बन्धनात् त्रिप्रकारेण (विष्वङ्) समन्ततः प्रचलन् स्थावरजंगमात्मकः संसारः (प्रथमेन) आदिस्वरूप (प्रमारेण) मारकेण क्षेत्रज्ञेन अर्थात् यदाऽऽत्मा क्षेत्रान्निर्गच्छति तदा क्षेत्रं मृतं कथ्यतेऽतो प्रमारः आत्मा ।। (गच्छति) आत्मना सह क्षेत्रं गतिं करोति जडत्वात् स्वयं कर्तुं न शक्नोति। अतः आत्माऽपि एकेन सत्त्वगुणेन अदः स्वर्गलोकं सुखमयं गच्छति। एकेन रजोगुणेन अदः सुखदुःखमयं मर्त्यलोकं गच्छति। एकेन तमोगुणेन (इह एव) अस्मिन् मर्त्यलोके एव निषेवते कर्मफलं भुंक्ते यथा च "पुण्येन पुण्यलोकं नयति पापेन पापम्, उभाभ्यामेव मनुष्यलोकम्।" इत्यादि।

समन्वय = यः पुरुषः सर्वेषु भूतेषु "भजन्ति जन्मलक्षणं विकारं भजन्ति इति भूतानि ब्रह्मादिस्थावरान्तानि, तेषु भूतेषु समम् एकरसं निर्विशेषमिति भावः। तिष्ठन्तं वर्तमानं परमेश्वरं विनश्यत्सु उत्पत्तिमत्त्वात् सर्वेषु पदार्थेषु नश्यत्सु अपि अविनश्यन्तं विनाशरहितं पश्यति अवलोकते। वस्तुतः सः मुमुक्षुः एव परमात्मानं पश्यति ॥ २८ ॥

(मू॰ गी॰) समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २८ ॥

(वेदगी॰) धीरासः पदं कवयो नयन्ति नाना हृदा रक्षमाणा अजुर्यम्।
सिषासन्तः पर्यपश्यन्त सिन्धुमाविरेभ्यो अभवत्सूर्यो नॄन् ॥ ४
ऋ॰ अष्ट॰ २ अध्या॰ २ व॰ १५ मं॰ २ (मं॰ १ सू॰ १४६ मं॰ ४)

धीरास इति = धीरासः धीमन्तः कवयः ज्ञानिनः नाना बहुविधया हृदा बुद्ध्या [शुद्धान्तःकरणेन] रक्षमाणा [प्राकृतिकपदार्थेभ्यः आत्मानं रक्षन्तः] अजुर्यं पदार्थेषु जीर्णतां गतेष्वपि जराहीनं सिषासन्तः सेवितुम् इच्छन्तः पदं ब्रह्मपदं नयन्ति स्वात्मानं प्रापयन्ति अत एव सर्वत्र तदेव सिन्धुं स्यन्दनशीलं ब्रह्म पर्यपश्यन्त परिपश्यन्ति। सूर्यः सर्वस्य प्रसविता परमात्मा एभ्यः नॄन् नभ्यः भक्तेभ्यः आविरभवत् आविर्भवति ॥ ४ ॥

कठोप॰ अध्या॰ १ वल्ली २ श्रु॰ २२ "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति," तथा कठोप॰ अध्या॰ १ वल्ली ३ श्रु॰ १२ "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः," तथा मुण्डकोप॰ मुं॰ ३ खं॰ १ श्रु॰ ५ "अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः," तथा मुण्डको॰ मुं॰ ३ खं॰ १ श्रु॰ ८ "ज्ञानप्रसादेन विशुद्धसत्त्वः ततस्तु तं पश्यते निष्कलं ध्यायमानः,"

सममिति = विवेकी पुरुषः सर्वत्र सर्वेषु भूतेषु समवस्थितं समानाऽवस्थया व्याप्तम् समम् एकरसम् ईश्वरं परमात्मानं पश्यन्
आत्मना स्वेनैव आत्मानं स्वं न हिनस्ति न नाशयति। ततः सज्ज्ञाननिष्ठया परां गतिं परं पदं मुक्तिमित्यर्थः याति प्राप्नोति॥२८॥

मू॰गी॰) समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम्।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥२८

(वेदगी॰) बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरन्तम्।
अनुष्टुभमनु चर्चूर्यमाणमिन्द्रं नि चिक्युः कवयो मनीषा ॥१॥
ऋ॰ अष्ट॰ ८ अध्या॰ ८ व॰ १॰ मं॰ १ (मंड॰ १०॰ सू॰ १२४ मं॰ ९)

बीभत्सूनामिति = कवयः क्रान्तदर्शिनः ब्रह्मवादिन ऋषयः बीभत्सूनां "यद्भयात् वाति वातोऽयं सूर्यस्तपति यद्भयात्।" इत्युक्तेः क
म्पमानाऽवयवानां वाय्वादिपञ्चभूतानां सयुजं समानभावमापन्नं सखायं व्याप्तं वा, दिव्यानां दिव्यगुणविशिष्टानाम्
अपां व्याप्तिमतां परमहाऽऽकाशानां सख्ये सखित्वे चरन्तं सहचारिणम् आकाशवत्सर्वत्र अवस्थितम्। हंसं हन्ति
सर्वत्र गच्छतीति हंसः सर्वव्यापकः सर्वेश्वरः परमेश्वरः तं हंसं परमात्मानम् आहुः कथयन्ति। अत एव कवयः क्रान्तदर्शिनः
ब्रह्मवादिनः मनीषा = मनीषया बुद्ध्या अनुष्टुभम् अनुस्तोभनीयं स्तोतव्यं चर्चूर्यमाणं सर्वत्र पुनः पुनः चरन्तम्
गच्छन्तम् एवंगुणविशिष्टम् इन्द्रं परमेश्वरं निचिक्युः जानन्ति। चर्चूर्यमाणम् = चरतेर्यङि "उत्परस्यातः" इत्य
भ्यासात् उत्तरस्य अकारस्य उत्वम्। "चरफलोश्चेति" नकि प्राप्ते व्यत्ययेन अभ्यासस्य रुगागमः। मनीषा = मनीषाश
ब्दात् तृतीयायाः "सुपां सुलुगिति" लुक्। चिक्युः = चायृ पूजानिशामनयोः" इत्यस्मात् छान्दसे लिटि "चायः की"
इति प्रकृतेः कीभावः "एरनेकाचो–" इति यण् ॥१ ॥तथा ईशोपनिषदि "असुर्या नाम ते लोका अन्धेन तमसा वृताः।
तांस्ते प्रेत्याऽभिगच्छन्ति ये के चात्महनो जनाः"

प्रकृत्यैवेति = यः पुरुषः प्रकृत्या कार्यकारणकर्तृत्वहेतुभूतया प्रकृत्या सर्वशः सर्वप्रकारैः क्रियमाणानि विधीयमानानि कर्माणि विहिताः प्रतिषिद्धा वा सर्वाः क्रियाः पश्यति। तथा तेनैव प्रकारेण आत्मना आत्मविवेकज्ञानशक्त्या आत्मानम् अकर्तारम् अभोक्तारञ्च यः पश्यन्ति स एव सर्वत्र आत्मानम् एकरसं पश्यति ॥२९॥

(मू० गी०) प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥२९॥

(वेदगी०) मय हौ अन्न मन्ति

ऋ० १।१२५।४ अथ

श्री गीता अध्याय ३।२८

यदेति = तत्त्वज्ञानी यदा यस्मिन् काले भूतपृथग्भावं भूतानाम् आकाशादीनां पृथग्भावं पार्थक्याम् एकस्थम् एकस्मिन् आत्मनि स्थितं वहेः चित्रमिव„ प्रलये अनुपश्यति अवलोकयति। सृष्ट्यादौ च ततः तस्मात्परमात्मन एव विस्तारं विस्तृतं कार्यभावम् आपन्नम् सर्वं प्रपञ्चं च अनुपश्यति। तदा ऽयमेव ब्रह्म संपद्यते ब्रह्म प्राप्नोति ब्रह्मभावं गच्छतीति वा ॥ ३१ ॥

(भ॰ गी॰) यदा भूतपृथग्भावमेकस्थमनुपश्यति।
ततः एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३१ ॥

(वेदगी॰) सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति।
छन्दांसि च दधतो अध्वरेषु ग्रहान् सोमस्य मिमते द्वादश ॥ ५
ऋ॰ मं॰ १० सू॰ ११४ मं॰ ५

सुपर्णमिति = विप्राः मेधाविनः कवयः तत्त्वज्ञाः ज्ञानिनः सुपर्णं शोभनं पतनं सर्वत्र व्याप्तिः यस्य सः सुपतनः तं सुपतनं सर्वत्र सुष्ठु व्याप्तम् एकम् असहायं सन्तं वर्तमानं परमात्मानं वचोभिः स्तुतिलक्षणैः वचनैः बहुधा बहु प्रकारं पार्थक्यप्रकारं कल्पयन्ति कथयन्ति। त एव तत्त्वज्ञाः मुनयः अध्वरेषु ज्ञानयज्ञेषु छन्दांसि वेदवाक्यानि दधतः धारयन्तः द्वादश बहुविधं सोमस्य परमात्मनः ग्रहान् स्वरूपान् मुक्तिपदग्रहणसाधनानि यज्ञानि वा उपांश्वन्तर्याम्यादीनि मिमते निर्मिमते। ग्रहान् = गृह्यन्ते [illegible] एभिरिति ग्रहः "ग्रह वृदृनिश्चिगमश्चेति करणे अप् प्रत्ययः। सोम स्योति कर्मणि षष्ठी ॥ ४ ॥ तथा कठोप॰ अध्या॰ २ वल्ली ५ श्रु॰ १२ "एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्„ ॥ १ ॥ तथा छान्दो॰ अध्या॰ ७ खं॰ २६ श्रु॰ २ "तदेष श्लोको न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः„ ॥ २ ॥ तथा छान्दो॰ अध्या॰ ७ खं॰ २६ श्रु॰ २ "स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश स्मृतः शतञ्च दश चैकश्च सहस्राणि च विंशतिः„ तथा छान्दो॰ अध्या॰ ७ खं॰ २६ श्रु॰ १ "तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानतः आत्मतः प्राणः आत्मत आशाऽऽत्मतः स्मरः आत्मतः आकाशः आत्मतस्तेजः आत्मत आपः आत्मतः आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः संकल्प आत्मतो मन आत्मतो वागात्मतो मंत्रा आत्मतः कर्माण्यात्मतः एवेदं सर्वमिति„ तथा ईशोपनिषदि "यस्तु सर्वाणि भूतान्यात्मन्येवाऽनुपश्यति। सर्वभूतेषु चात्मानं ततो न विजिगुप्सते।

अनादित्वादिति = हे कौन्तेय! हे अर्जुन! अनादित्वात् न विद्यते आदिः आदिम विकारो जन्म यस्य सोऽनादिः, अनादेर्भावोऽनादित्वम् तस्मात् अनादित्वात्, निर्गुणत्वात् गुणाः सत्त्वादयः शब्दादयश्च तेभ्यो निर्गतः यः स निर्गुणः, यद्वा गुणाः गुणकार्यभूताः प्राणादयः षोडशकलाशब्दवाच्यास्तेभ्यो निर्गतत्वात् निर्गुणः तस्य भावः निर्गुणत्वम् तस्मात् निर्गुणत्वात्। अव्ययः आश्रयविनाशे सति आकाशवत् न व्येति इत्यव्ययः अयं परमात्मा, परमेश्वरः सौ आत्मा परमात्मा शरीरस्थः अपि शरीरेषु वस्त्रादि लब्ध्वा तेषु पदार्थेषु तिष्ठतीति शरीरस्थः अपि न करोति पापपुण्यलक्षणं कर्म न करोति न च तत्कर्मफलैः लिप्यते सम्बद्धः न भवति ॥ ३१ ॥

(भ. गी.) अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१ ॥

वेद. साकंजानां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इति।
तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि
रूपशः ॥ १.१५ ऋ. अष्ट. २ अ. ३ व. १६ मं. १५

साकंजानामिति = साकञ्जानां सहजातानां पञ्चानाम् इन्द्रियाणाम् आत्मा, सप्तमः। तेषाम् इष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा सम्मोदन्ते यत्र इमानि सह रूपीणि वा इन्द्रियाणि एभ्यः पर आत्मा तानि एतस्मिन् एकं भवन्तीति ॥ ३१ ॥

यथेति = यथा येन प्रकारेण सौक्ष्म्यात् स्वव्याप्यद्रव्यापेक्षया स्वयमति सूक्ष्मत्वात् सर्वगतं सर्वमूर्तद्रव्येषु बहिरन्तर्व्याप्य वर्तमानम् आकाशं नोपलिप्यते संगदोषेण लिप्तं न भवति। तथा तेनैव प्रकारेण आत्मा सर्वत्र देहे सर्वेषु देहेषु अवस्थितः वर्तमानः नोपलिप्यते तत्संगदोषं न प्राप्नोति ॥ ३२॥

(मू. गी.) यथा सर्वगतं सौक्ष्म्यात् आकाशं नोपलिप्यते।
सर्वत्राऽवस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२॥

(वेद गी.) ऊर्ध्वो नु सृष्टा३स्तिर्यङ् नु सृष्टा३: सर्वा दिशः पुरुष आ बभूवाँ
पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ॥ २८॥

मूलस्थोपेक्ष: "अथ. कां. १० सू. २ मं. २८ यद्वा" इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः,,
"महाँ इन्द्रः [redacted] नु महित्वमस्तु वज्रिणे। द्यौर्न प्रथिना शवः,, ऋ. मंड. १ सू. ११ मं. १

ऊर्ध्व इति - पुरुषः = (पुरि + वस, पुर + उस = पुरुषः) पुरि शरीरे वसतीति पुरुषः आत्मा ऊर्ध्वः देहस्य उपरिभागे नु निश्चयेन सृष्टाः प्रसृतः अस्ति। पुरुषः तिर्यङ् देहस्य तिर्यग्भागेषु नु निश्चयेन सृष्टाः प्रसृतः अस्ति। पुरुषः सर्वाः दिशाः देहस्य सर्वाङ्गेषु आ बभूव व्याप्तः अस्ति प्रकाशयति वा। यः पुरुषः ब्रह्मणः [redacted] देहे व्याप्तस्य आत्मनः पुरं नगरीं अर्थात् देहं वेद जानाति। यस्याः यस्याः पुरः हेतोः पुरुषः अयं जीवात्मा पुरुष इति उच्यते इति कथ्यते ॥ २८॥ यथा च "अथ अर्वाक् एनम् एतासु अप्सु अन्विच्छ,, गोपथब्रा. १। ४ तथा छान्दोग्योपनिषदि स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते,,

विश्वाः सर्वाः प्रजाः इन्द्रं परमात्मानं समुद्रव्यचसम् आकाशवद्व्यापकम् ,, समुद्र इत्यन्तरिक्ष नाम,, नि. १। ३ अवीवृधन् वर्धितवत्यः।।

महानिति = [redacted] स्वविस्तारेण विस्तृतः द्यौः न आकाश इव [redacted] आत्मा महान् अस्ति च परः सर्वेभ्यः परः सूक्ष्मः अस्ति। वज्रिणे दण्डमात्मा के वज्रधारिणे म[redacted]महिमा अस्तु अस्ति तस्य शवः बलं महान् अस्ति।

यथेति = यथा येन प्रकारेण एकः अन्यमनपेक्षमाणः असहायः रविः सूर्यः कृत्स्नं समग्रं लोकं संसारं प्रकाशयति स्वतेजसा भासयति। हे भारत! हे अर्जुन! तथा तेनैव प्रकारेण क्षेत्री आत्मा कृत्स्नं समग्रं क्षेत्रं महदादिसर्वविकारोपेतं प्राकृतं देहं प्रकाशयति ॥ ३४॥

(मू. गी.) यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३४॥

(वेद गी.) अग्निर्नेता भग इव क्षितीनां दैवीनां देव ऋतुपा ऋतावा।
स वृत्रहा सनयो विश्ववेदाः पर्षद्विश्वाति दुरिता गृणन्तम् ॥ ४॥
ऋ. अष्ट. ३ अध्या. १ व. २ मं. ४ (मंड. ३ सू. २० मं. ४)

"रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः" अथ. कां. १३ सू. ४ मं. २

अग्निरिति = ऋतुपा भग इव = यथा ऋतुपाः वसन्ताद्यृतूनां पालकः देवः द्योतनशीलः भगः सूर्यः दैवीनां क्षितीनाम् आकाशपृथिव्यादीनां प्रकाशकः अस्ति। तथा क्षितीनाम् आत्मनिवासानां देहानां दैवीनाम् इन्द्रियाणाम् इदं दैवं क्षीयते दैवी तासां दैवीनाम् इन्द्रियाधिष्ठानमयीनां क्षितीनां तनूनां नेता अन्तर्यामितया नियामकः सर्वस्य प्रकाशदानेन प्रवर्तकः। ऋतावा सत्यकर्मा, वृत्रहा वृत्रस्य पापस्य हन्ता, सनयः सनातनः पुराणः विश्ववेदाः सर्वविषयज्ञाता सर्वज्ञः देवो द्योतमानः अग्निः परमात्मा गृणन्तं तद्विषयां स्तुतिं कुर्वन्तं स्तोतारं विश्वा = विश्वानि सर्वाणि दुरिता = दुरितानि पापानि अतिपर्षत् अतिक्रम्य पारं नयतु। नेता = णीञ् प्रापणे इत्यस्य तृचि रूपम्। क्षितीनाम् = क्षि निवासगत्योः "क्तिच् क्तौ च संज्ञायाम्" इति क्तिच्। दैवीनाम् = देवशब्दात् सम्बन्धार्थे "देवाद्यञञौ" इति अञ्। "टिड्ढाणञ्—" इति ङीप्। ऋतुपाः = पा रक्षणे "अन्येभ्योऽपि दृश्यते" इति विच्, ऋतून् पातीति इत्युपपदमिति द्वि. ति समासः। वृत्रहा = हन हिंसागत्योः "ब्रह्मभ्रूणवृत्रेषु क्विप्" इति क्विप्। पर्षत् = पॄ पालनपूरणयोरिति लेटि सिब्बहुलम्" इति सिप् अडागमः, "इतश्च लोपः" इतीकारलोपः। गृणन्तम् = गॄ शब्दे लटः शतृ क्र्यादित्वात् श्ना "प्वादीनां ह्रस्वः" "श्नाभ्यस्तयोरातः" इत्याकारलोपः शतृप्रत्ययः ॥ ४॥

रश्मिभिरिति = रश्मिभिः सूर्यस्य किरणैः नभः आकाशम् आभृतम् व्याप्तम् परिपूर्णम् अस्ति तथा महेन्द्रः जीवात्मा आवृतः सर्वस्मिन् देहे स्वप्रकाशेन आवृतः एति ~~सम्पूर्णं प्राप्नोति~~ चलति ॥

क्षेत्रक्षेत्रज्ञयोरिति-ये मुमुक्षवः क्षेत्रक्षेत्रज्ञयोः प्रकृतिपुरुषयोः एवं अन्तरं भेदं ज्ञानचक्षुषा इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः,, एतज्ज्ञानमेव चक्षुः तेन ज्ञानचक्षुषा विदुः जानन्ति च तथा भूतप्रकृतिमोक्षं भूतं तत्स्वरू-
पं व्यक्तस्वरूपमित्यर्थः। प्रकृतिः मूलकारणमव्यक्तस्वरूपम् तयोः द्वयोः भूतप्रकृत्योः स्वाभाविककर्मणः मोक्षं विदुः जानन्ति
ते परमं पदं विदेह कैवल्यं यान्ति प्राप्नुवन्ति ॥३५॥ इति श्रीजगन्नाथशास्त्रिसंकलितायां गीतावेदार्थबो-
धिन्यां त्रयोदशोऽध्यायः समाप्तः ॥१३॥

(मू.गी.) क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा। भूतप्रकृतिमोक्षं च ये विदु-
र्यान्ति ते परम् ॥३५॥ इति श्रीमद्भगवद्गी. क्षेत्रक्षेत्रज्ञनिर्देशयोगो नाम त्रयोदशः १३॥

(वेदगी.) क्षेत्रादपश्यं सनुतश्चरन्तं सुमद्यूथं न पुरु शोभमानम्।
न ता अगृभ्रन्नजनिष्ट हि षः (सः) पलिक्नीरिद्युवतयो भवन्ति ॥४
ऋ. अष्ट.३ अध्या.८ व.१४ मं.४ (मंड.५ सू.२ मं.४)

क्षेत्रादिति-अहं मुमुक्षुः क्षेत्रात् क्षेत्रे देहे प्रपञ्चे वा सनुतः अन्तर्हितनामैतत्। अन्तर्हितं निगूढं चरन्तं वर्तमानं यूथं न, यूथे देहेन्द्रि-
यसंघाते इव पुरु बहुशोभमानं स्वभासा प्रकाशमानम् (सुमति सर्वदा प्रसन्नम्) आत्मानम् अपश्यम् पश्यामि। ये ज्ञानिनः ताः क्षेत्रप्रकृतीः न अगृभ्रन्
न अगृह्णन् न गृह्णन्ति तदर्थे सः परमेश्वरः हीतिनिश्चये अजनिष्ट प्रादुर्भवति। भगवत्साक्षात्कारः भवतीतिभावः।
अत एव पलिक्नीः इत् पलिक्न्यः पलिताः भगवत्प्रकाशा एव युवतयः परंपदप्राप्तये मिश्रीभूताः भवन्ति ॥४॥
इति श्रीसारस्वतान्वयलेखावास्तव्यन्यायभूषणजगन्नाथशास्त्रिज्योतिर्विदो.टी.कृतायां
वेदगीतार्थबोधिन्यां क्षेत्रक्षेत्रज्ञयोगो नाम त्रयोदशोऽध्यायः समाप्तः १३
श्रीकृष्णार्पणमस्तु श्रीरस्तु ॥

(अथ चतुर्दशाऽध्यायारंभः)

"यस्य निःश्वसितं वेदः यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनः यातः कुरुक्षेत्रे सुदर्शनम्" १

वेदो गीता तथा गीता वेद एव न संशयः। वेदगीतापृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनात् ॥२॥

श्रीभगवान् उवाच। हे अर्जुन! ज्ञानानां सांख्ययोगकर्मसम्बन्धिज्ञानानां मध्ये उत्तमं परं श्रेष्ठं भूयः पुनः प्रवक्ष्यामि कथयिष्ये। सर्वे मुनयः यत् ज्ञानं ज्ञात्वा इतोऽस्मात् संसारात् परां सिद्धिम् उत्तमां सिद्धिं विदेहमुक्तिं गताः प्राप्ताः १

(मूलगी) श्रीभगवानुवाच। परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥१॥

(वेदगी)

इदमिति= अन्वयः इदं मुक्तिकारणं ज्ञानं प्रकृतिपुरुषविवेकम् आश्रित्य आश्रयं कृत्वा मम परमात्मनः साधर्म्यम् समानधर्मताम् आगताः सर्गे पुनर्जन्मानि न उपजायन्ते न प्राप्नुवन्ति, प्रलये महाप्रलये हिरण्यगर्भनाशेऽपि न व्यथन्ति न नश्यन्ति २॥

(मू. गी.) इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥२॥

(वेद गी.) बोधश्च॑ त्वा प्रतिबोधश्च॑ रक्षतामस्वप्नश्च॑ त्वा नवद्राणश्च॑
रक्षताम्। गोपायंश्च॑ त्वा जागृविश्च॑ रक्षताम्॥ १२
अथ. कां. ८ अनु. १ सू. १ मं. १३

बोधश्चेति= हे मुमुक्षो! हे यते! बोधः प्रकृतिपुरुषज्ञानं प्रतिबोधः प्रकृतिपुरुषज्ञानानुभवश्च त्वा त्वां तत्त्वज्ञानिनम् रक्षताम्। अस्मात् संसारजन्मतः रक्षां कुरुताम्। तथा अस्वप्नः स्वप्नः मिथ्यासृष्टिः न स्वप्नः अस्वप्नः मिथ्यासृष्टिरहितः च तथा अनवद्राणः निद्राशून्यता साऽवधानता अपि त्वा त्वां मुमुक्षुं रक्षताम् संसाराद्दूरे संस्थापयताम्। च तथा गोपायन् सर्वदा संसारविषयेभ्यः स्वात्मानं गोपायिता रक्षिता। तथा जागृविः सर्वदा परमात्मनः ज्ञानध्याने जागरणशीलः बोधप्रतिबोधौ रक्षताम् संसारादर्वाक्‌ गोपायेताम् ॥१३॥

ममेति = हे भारत ! हे अर्जुन ! मम मदीया गुणत्रयसाम्यावस्थापन्ना महद्ब्रह्म प्रकृतिः योनिः सर्वभूतोत्पत्तिकारणम् अस्ति, यतः सर्वेभ्यः स्वकार्येभ्यः महत्वेन महत् इत्युच्यते। स्वकार्याणां बृंहकत्वेन ब्रह्मेत्युच्यते। तस्मिन् जगद्बीजे महद्ब्रह्मणि अहं परमात्मा गर्भं स्वाऽऽभासं बीजं दधामि निक्षिपामि। ततः मद्दत्ताऽऽभाससामर्थ्यसमन्वितात् महद्ब्रह्मणः प्रकृतेः सर्वभूतानां सकलभूतकार्याणां चतुर्विधप्राणिशरीराणाञ्च संभवः उत्पत्तिः भवति ॥ ३ ॥

(मू. गी.) मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥

(वेद गी.) यत् प्राणः स्तनयित्नुनाभिक्रन्दत्योषधीः।
प्रवीयन्ते गर्भान् दधतेऽथो बह्वीर्विजायन्ते ॥ ३ ॥
अथ. कां. ११ अनु. २ सू. ६ मं. ३

यदिति = यत् यस्मिन् काले प्राणः प्रकर्षेण अनिति सर्वं चराऽचरं व्याप्य चेष्टते इति प्राणः परमेश्वरः स्तनयित्नुना स्वप्रेरणाध्वनिना ओषधीः स्थूलजगद्वल्लरीः प्रकृतिम् अभिक्रन्दति अभिलक्ष्य स्वाऽऽभासप्रदानाय शब्दं करोति आह्वयति। तदा प्रकृतिः गर्भान् गर्भं भगवदाऽऽभासबीजं प्रवीयन्ते प्राणाऽभिक्रन्दनमात्रादेव गर्भं गृह्णन्ती त्यर्थः। तदानीम् एव गर्भान् दधते धारयन्ति। अथो अनन्तरमेव बह्वीः बह्व्यः बहुप्रकाराः सकलभूतकार्याणि चतुर्विधप्राणिशरीराणि च विजायन्ते विविधम् उत्पद्यन्ते ॥ ३ ॥

सर्वेति = हे कौन्तेय! हे कुन्तीसुत! अर्जुन! सर्वयोनिषु देवमनुष्यादिसकलयोनिषु याः मूर्तयः देहाः संभवन्ति जायन्ते। तासाम् मूर्तीनां देहानां महद्ब्रह्म प्रकृतिः योनिः उत्पादयित्री भवति। अहं परमेश्वरः बीजप्रदः गर्भदाता पिता भवामि ॥४॥

(भ.गी.) सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥४॥
(वेदगी.) विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥१॥
ऋ. अष्ट ८ अध्या. ८ व. ४२ मं. १ (मंड. १० सू. १८४ मं. १)

विष्णुरिति = विष्णुः सर्वव्यापकः परमात्मा योनिं गर्भाधानस्थानं प्रकृतिं कल्पयतु प्रकटीकुरुते। त्वष्टा तनूकर्ता प्रकृतिरितिभावः रूपाणि रूपाणीत्युपलक्षितं रूपाणि रूपयुतानि शरीराणि स्त्रीत्वपुंस्त्वाभिव्यञ्जकानि चिन्हानि इति वा पिंशतु पिनष्टि अवयवी करोति। पिंश अवयवे प्रचादित्वात् नुम्। एवं प्रकृत्यायां योन्यां प्रजापतिः प्रजारक्षकः स्वामी परमात्मा आसिञ्चतु रेत आसिञ्चति विसृजतीत्यर्थः। धाता गर्भधारकः देवः ते गर्भं मनुष्यादियोनिं दधातु धारयति ॥१॥

सत्त्वमिति = हे महाबाहो! सत्त्वं रजः तम इति त्रयः गुणाः प्रकृतिसंभवाः प्रकृतिः एव संभव उत्पत्तिस्थानं येषां ते ऽस्मिन् देहे अव्ययं व्ययरहितं देहिनम् आत्मानं निबध्नन्ति अहंममाभिमानाऽभिनिवेशरज्ज्वा बध्नन्ति ॥ ५ ॥

(मू. गी.) सत्त्वं रजस्तमः इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥

(वेद गी.) त्रयः पवयो मधुवाहने रथे सोमस्य वेनामनु विश्व इद्विदुः ।
त्रयः स्कंभासः स्कभितास आरभे त्रिर्नक्तं याथस्त्रिर्वश्विना दिवा ॥ २ ॥
अ १.१ अध्या. ३ व. ४ मं. २ (मं. १ सू. ३४ मं. २)

त्रय इति = मधुवाहने = मधुनः जीवनमाधुर्यस्य वहनेन युक्ते अश्विनोः आत्ममनसोः रथे शरीरे पवयः वज्रवद्विनाशकाः त्रयः सत्त्वं रजः तम इति त्रिसंख्याकाः गुणाः सन्ति । इत् इत्थं विश्वे सर्वे विवेकिनः पुरुषाः सोमस्य आत्मनः वेनाम् कमनीयतां मेधावित्वं वा अनुविदुः जानन्ति । तत्र शरीररथे स्कंभासः स्तंभविशेषाः त्रयः त्रिसंख्याकाः सत्त्वं, रजः, तमः, इति त्रयः गुणाः आरभे आरब्धे सति शरीरम् अवलंबितुम् स्कभितासः स्थापिताः सन्ति हे अश्विनौ! आत्ममनसौ! युवां तादृशेन शरीररथेन नक्तं रात्रौ त्रिर्याथः बहुवारं गच्छथः । तथा दिवा दिवसेऽपि त्रिर्याथः अर्थात् अहर्निशं शरीररथम् आरुह्य पुनः पुनः क्रीडथः इत्यर्थः ।
मधुवाहने = मधु वाह्यतेऽनेनेति मधुवाहनः, करणे ल्युट् । विदुः = वेत्ते लिटि "विदो लटो वा" इति झेः उसादेशः । स्कंभासः = ष्टभि, स्कभि गतिप्रतिबन्धयोः । स्कभ्नन्ते प्रतिबद्धाः भवन्ति इति स्कंभाः "पचाद्यच्" । स्कभितासः = स्कभु स्तौत्रे धातुः । अस्मात् "निष्ठा" "यस्य विभाषा" इतीट् प्रतिषेधे प्राप्ते "क्षुभित स्कभित स्तभित" इत्यादिना इडागमो निपातितः । आरभे = रभ राभस्ये धातुः अस्मात् आङ्पूर्वात् संपदादिलक्षणो भावे क्विप् ॥ २ ॥

तत्रेति- हे अनघ! हे निष्पाप! हे अर्जुन! तत्र तेषु गुणत्रयेषु सत्वं सत्वगुणः निर्मलत्वात् रजस्तमोमलरहितत्वात् प्रकाशकं सर्ववस्तुज्ञानप्रभासकम् अनामयम् रजस्तमोगुणरोगशून्यम् सत् सुखसंगेन पारलौकिकसुखवाञ्छा संगेन सज्जते अनेनेति संगः कामः तेन कामेन बध्नाति संयोजयति च। तथा ज्ञानसंगेन ज्ञायते परमेश्वरोऽनेनेति ज्ञानम् परमेश्वरमहत्वप्रतिपादकं शास्त्रं तस्मिन् संगः आसक्तिः तेन बध्नाति ब्रह्मनिष्ठायां संयोजयति ॥ ६ ॥

(मू. गी.) तत्र सत्वं निर्मलत्वात् प्रकाशकमनामयम्।
सुखसंगेन बध्नाति ज्ञानसंगेन चानघ! ॥ ६ ॥

(वे. गी.) . . . . . . . . . . . . . . . .
. . . . . . . . . . . . .

रज इति = हे अर्जुन! रजः रजोगुणं तृष्णासंगसमुद्भवम् अप्राप्ते वस्तुनि प्राप्त्याशा तृष्णा संगः प्राप्तेषु ग्रहणे स्पृहा संगः। तयोः तृष्णासंगयोः संभव उत्पत्तिर्यस्मात् तत् तृष्णासंगसमुद्भवं यद्वा तृष्णायाः संगेन समुद्भवम् रागात्मकं रज्यतेऽनेनेति रागः स्नेहः अनुरक्तिरितियावत् स राग एव आत्मा स्वरूपं यस्य तद्रागात्मकं स्नेहस्वरूपं विद्धि जानीहि। हे कौन्तेय! हे कुन्तीसुत! हे अर्जुन! तत् रजः देहिनम् आत्मानं ज्ञानिनं पुरुषम् कर्मसंगेन कर्मसु लौकिकवैदिककर्मसु संगः तत्परता कर्मसंगः तेन कर्मसंगेन कर्मतत्परत्वेन बध्नाति संयोजयति ब्रह्मज्ञानिनमपि कर्मठं करोतीतिभावः। ७॥

(मू. गी.) रजो रागात्मकं विद्धि तृष्णासंगसमुद्भवम्।
तन्निबध्नाति कौन्तेय कर्मसंगेन देहिनम्॥ ७॥

(वेदगी.) यस्येदमा रजोयुजस्तुजे जने वनं स्वः। इन्द्रस्य रन्त्यम् बृहत्॥ १॥
साम. अध्या. ६ आरण्यकपर्व मं. ३। अथ. कां. ६ सू. ३३ मं. १

यस्येति = युजः ब्रह्मज्ञानरतस्य यस्य इन्द्रस्य आत्मनः इदं रजः रजोगुणः अस्ति। तद्रजः रजोगुणः ~~वैदिकव्यवहारनिमित्ते दानदातरि~~ पुरुषे वनं वननीयं संभजनीयं रन्त्यम् अत्यन्तरमणीयं बृहत् प्रभूतम् स्वः विहितशुभकर्मफलात्मकं सुखं प्राप्तव्यं निरतिशयं सुखं ~~यद्भवतीति~~ प्रेरयति। रजः = रञ्ज रागे इत्यस्मात् असुनि रजकरजनरजःसूपसंख्यानम्" इत्युपधालोपः। युजः = युजिर् योगे = अस्माद्धातोरसुनि। स्वः सुपूर्वाद् अर्तेर्विच्। रन्त्यम् = रमु क्रीडायाम् अस्मात् क्तिच् क्तौ च संज्ञायाम्" इति क्तिच् "न क्तिचि दीर्घश्च" इत्यनुनासिकलोपदीर्घयोरभावः। अत एव अन्यत्राम्नातम् "रन्तिर्नामासि दिव्यो गन्धर्वः" इति तै. आर. ४।११।५ तत्र भवं रन्त्यम्॥ १॥

जीवात्मनि

✻. जनः लौकिके सुखं परमसुखं मनुते

तम इति= हे अर्जुन! तमः तमोगुणम् अज्ञानजं ज्ञानसत्ताऽभावात् जातं सर्वदेहिनां सकलप्राणिनां मोहनं "मोहयति सदसद्विवेकज्ञानं तिरोभावयतीति मोहनं ज्ञानाऽऽवरकं विद्धि जानीहि। हे भारत! हे अर्जुन! तत् तमोगुणः प्रमादाऽऽलस्यनिद्राभिः प्रयत्नेन कर्तव्ये कार्ये विस्मृतिः प्रमादः "कर्तव्ये कार्ये श्रद्धोत्साहाऽभावः आलस्यम्,, "विमोहबुद्ध्या कर्तव्यं विहाय स्वापः निद्रा, प्रमादश्च आलस्यश्च निद्रा च प्रमादालस्यनिद्राः ताभिः प्रमादालस्यनिद्राभिः निबध्नाति नितरां ब्रह्मज्ञानिनमपि मोहबन्धनेन संयोजयति ॥ ८ ॥

**(मू. गी.) तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥**
**(वेद गी.) यदि स्थ तमसावृता जालेनाभिहिता इव।**
**सर्वाः संलुप्येतः कृत्याः पुनः कर्त्रे प्रहिण्मसि ॥ ३ ॥**
**अथ. कां. १. अनु. १ सू. १ मं. ३.** "मैतं पन्थामनु गा भीम एष येन पूर्वं नेयथ तं ब्रवीमि। तम एतत् पुरुष मा प्र पत्था भयं परस्तादभयं ते अर्वाक्,, १० अथ. कां. ८ अनु. १ सू. १ मं. १० यदीति= हे पुरुषाः! यूयं यदि जालेन पाशेन अभिहिताः समन्तात् धारिता इव तमसा तमोगुणेन आवृताः संलिप्ताः स्थ, तर्हि युष्माकं सर्वाः सकलाः कृत्याः सुकर्माणि इतः अस्मात् लोकात् संलुप्य विनश्य पुनः कर्त्रे कर्मकर्त्रे कर्मकर्तारं पुरुषं प्रहिण्मसि विनाशयति पुरुषव्यत्ययः ॥ ३ ॥ यद्वा "हे पुरुष! हे मुमुक्षो! त्वम् एतं तमोगुणवन्तं पन्थां मार्गं मा अनुगाः मा गच्छ। एषः तमोगुणमार्गः भीमः भयानकः अस्ति। अत एतं तमोगुणं मा गच्छ। येन तमोगुणमार्गेण पूर्वम् एतदाचरणात् पूर्वं न इयथ न गच्छसि। अतोऽहं तं तमोगुणमार्गं मा गच्छ इति ब्रवीमि कथयामि। हे पुरुष! एतत् मयावहम् अधोगतिकारकं तमः तमोगुणं मा प्रपत्थाः प्रपदनं मा कार्षीः। परस्तात् पुरस्तात् अग्रे स्थिते तमोगुणप्रदेशे भयं पतनभयं भवतीति शेषः। अर्वाक् तमोगुणतः अर्वाक् सत्त्वगुणे ते तव अभयं भयाभावः क्षेमं भवतीत्यर्थः ॥ १० ॥

सत्त्वमिति= हे भारत! हे अर्जुन! सत्त्वं सत्त्वगुणः सुखे इन्द्रियजन्ये सुखे संजयति संयोजयति लगयति। रजः रजोगुणः कर्मणि लौकिकवैदिककर्मणि संजयति संयोजयति। तमस्तु तमोगुणस्तु ज्ञानं ब्रह्मज्ञानम् आवृत्य आच्छाद्य प्रमादे उत अपि आलस्यनिद्रयोरपि संजयति सक्तं करोति। ९॥

(मू.गी.) सत्त्वं सुखे संजयति रजः कर्मणि भारत।
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥९॥

(वेदगी.) . . . . . . . . . .

रज इति = हे भारत! हे अर्जुन! सत्त्वं सत्त्वगुणः रजः रजोगुणं च तमः तमोगुणम् अभिभूय प्रधानं भवति। रजः रजोगुणः सत्त्वं सत्त्वगुणं चैव तमः तमोगुणं प्रधानो भवति स्वकार्यं करोति। तथा तेनैव प्रकारेण तमः तमोगुणः सत्त्वं सत्त्वगुणं रजः रजोगुणम् अभिभूय भवति स्वकार्यं करोति ॥ १०

(भ. गी.) रजस्तमश्चाभिभूय सत्त्वं भवति भारत।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥

(वेदगी.) आरभस्वेमाममृतस्य श्नुष्टिमच्छिद्यमाना जरदष्टिरस्तु ते।
असुं त आयुः पुनरा भरामि रजस्तमो मोप गा मा प्र मेष्ठाः ॥ १ ॥
अथ. कां. ८ अनु. १ सू. २ मं. १

आरभस्वेति = हे मुमुक्षु पुरुष! इमां तत्त्वज्ञानिभिरुपदिश्यमानाम् अमृतस्य अमरणत्वस्य मुक्तेः श्नुष्टिं (रसपानं) प्रस्तुतिम् आरभस्व। अनुभवितुम् उपक्रमस्व। त्वं रजः रागं सत्त्वगुणप्रतिबन्धकं रजोगुणम् मोपगाः मा प्राप्नुहि। एवं तमः हिताऽहितविवेकप्रतिरोधकं ज्ञानाऽऽवरकं तमोनामकं गुणं मोपगाः मा प्राप्नुहि। एतत्सर्वं ज्ञात्वा मा प्रमेष्ठाः संसारे पुनः हिंसां मा प्राप्नुहि। रजोतमोगुणपरित्यागात् ते तव अच्छिद्यमाना परैः विच्छेत्तुमनर्हा जरदष्टिः जराऽवस्थापर्यन्तम् अष्टि अशनम् अस्तु। तदर्थं ते तव असुं प्राणं मृत्युनाऽपहृतम् आयुश्च पुनः आभरामि आहरामि। मोपगाः = इण् गतौ "इणो गा लुङि" इति गादेशः। मेष्ठाः = मीङ् हिंसायाम् लुङि रूपम्

सर्वद्वारेषु इति= यदा यस्मिन् काले ऽस्मिन् देहे ऽस्मिन् शरीरे सर्वद्वारेषु सर्वेषु त्वक्चक्षुरादीन्द्रियेषु ज्ञानं ज्ञानप्रसक्तिलक्षणः प्रकाशः स्फुरणम् उपजायते उद्भवति । तदा तस्मिन् काले सत्त्वं सत्त्वगुणं विवृद्धं विशेषेण वृद्धिं प्राप्तं विद्यात् जानीयात् ॥ १ ॥

(मू· गी·) सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥

(वेदगी·) अप तस्य हतं तमो व्यावृत्तः स पाप्मना ।
सर्वाणि तस्मिन् ज्योतींषि यानि त्रीणि प्रजापतौ ॥ ४०
अथ· कां· १० अनु· ४ सू· ७ मं· ४०

अप तस्येति= "~~[illegible]~~ । तस्य पुरुषस्य तमो तमोगुणः अपहतं विनष्टं दूरीभूतमित्यर्थः । "सः" ~~[illegible]~~ इति= सः पुरुषः पाप्मना पापकर्मप्रवर्तकेन रजोगुणेन व्यावृतः निवृत्तोऽस्ति । तस्मिन् रजस्तमोगुणरहिते पुरुषे सर्वाणि ज्योतींषि सर्वेन्द्रियप्रकाशाः यद्वा भगवत्साक्षात्कारप्रकाशः भवन्ति । यानि त्रीणि कर्मोपासनाज्ञानानि ज्योतींषि प्रकाशः प्रजापतौ प्रजा अपत्यं तत्पतौ पूर्णज्ञानिनि भवति ॥ ४० ॥

लोभ इति = हे भरतर्षभ! हे भरतकुलश्रेष्ठ! हे अर्जुन! लोभः लोलुपता, प्रवृत्तिः सर्वेन्द्रियचेष्टा, कर्मणां लौकिकवैदिककर्मणाम् आरंभः उपक्रमः। अशमः शान्त्यभावः, स्पृहा = विषयेषु। रजसि रजोगुणे विवृद्धे वृद्धिं प्राप्ते सति एतानि लोभादीनि जायन्ते उत्पद्यन्ते॥१२॥

(मू. गी.) लोभः प्रवृत्तिरारंभः कर्मणामशमः स्पृहा।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ॥१२॥

(वेदगी.) न सायकस्य चिकिते जनासो लोधं नयन्ति पशु मन्यमानाः।
नावाजिनं वाजिना हासयन्ति न गर्दभं पुरो अश्वान्नयन्ति॥२३॥
ऋ. अष्ट. ३ अध्या. ३ व. २३ मं. २३ (मं. ३ अनु. ४ सू. ५३ मं. २३)

न सायकस्येति = हे जनासः! हे जनाः! सायकस्य वज्रवन्नाशकस्य लोभादिकस्य तत्त्वं न चिकिते भवद्भिः न ज्ञायते। लोधं लोभं लोभोपहतं पुरुषं पशुमन्यमानाः पशुवन्मन्यमानाः सर्वे लोकाः नयन्ति रजोगुणगणनायां नयन्ति प्रापयन्ति। वाजिना = वाचोम् इनाः स्वामिनः वाजिनाः वागीशाः जनाः अवाजिनं वाचां इनः वाजिनः तं वाजिनं वागीशं सर्वज्ञं तद्विलक्षणम् मूर्खजनं न हासयन्ति हास्याऽऽस्पदं न कुर्वन्ति। सात्त्विकाः राजसहास्यं न कुर्वन्ति। राजसाश्च सात्त्विकं तामसे च हासयन्तीति भावः। यथा शालिहोत्रकाः अश्वात् पुरः पुरस्तात् गर्दभं रासभं न नयन्ति॥२३॥

अप्रकाश इति= हे कुरुनन्दन! हे अर्जुन! तमसि तमोगुणे विवृद्धे वृद्धिं प्राप्ते सति अप्रकाशः स्फुरणाऽभावः, अप्रवृत्तिः प्रवृत्त्यभावः आलस्यमित्यर्थः। प्रमादः कर्तव्याऽसाधनता, मोहः मूढत्वं चकारात् निद्रादिकम् एतानि सर्वाणि जायन्ते प्रादुर्भवन्ति ॥१३॥

(मू.गी.) अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥१३॥

(वेद.गी.) . . . . . . . . . . . . . .

. . . . . . . . . . . . . .

यदेति= यदा यस्मिन् काले सत्वे सत्वगुणे प्रवृद्धे प्रकर्षेण वृद्धिं प्राप्ते सति देहभृत् प्राणी प्रलयं देहपरित्यागं याति। तदा तस्मिन् काले देही उत्तमविदां ब्रह्मोपासकानाम् अमलान् विक्षेपाऽऽवरणरहितान् शुद्धान् लोकान् हिरण्यगर्भादिलोकान् शुद्धजन्मानि वा प्रतिपद्यते प्राप्नोति ॥१४॥

(मू॰गी॰) यदा सत्वे प्रवृद्धे तु प्रलयं याति देहभृत्।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥१४॥

(वेदगी॰) उत् केतुना बृहता देव आगन्नपावृक् तमोऽभिज्योतिरश्रैत्।
दिव्यः सुपर्णः स वीरो व्यख्यददितेः पुत्रो भुवनानि विश्वा ॥९॥

अथ॰ कां॰ १३ सू॰ २ मं॰ ९

उत् केतुना इति= देवः सत्वप्रधानः मुक्तात्मा बृहता महत्तरेण केतुना प्रज्ञानेन उदागन् उत्तमान् लोकान् गच्छति। तमोभिः तामसैः आवरणैः अपावृक् सर्वथा मुक्तः सन् ज्योतिः प्रकाशात्मकं परमेश्वरम् अश्रैत् आश्रयति। परमेश्वरशरणं प्राप्नोति। स मुक्तात्मा अदितेः अखण्डस्य परमेश्वरस्य पुत्रः पालयितव्यः पुत्रः दिव्यः दिव्यगुणयुक्तः सुपर्णः शुभ ज्ञानवान् वीरः ज्ञानशूरः विश्वा विश्वानि सर्वाणि भुवनानि लोकान् व्यख्यत् विविधप्रकारेण स्वज्ञानप्रकाशेन प्रकाशयति ॥९॥

रजसीति = पुरुषः रजसि रजोगुणप्रवृद्धौ सत्यां प्रलयं गत्वा मृत्युं प्राप्य कर्मसंगिषु कर्मयोगिमध्ये जायते जन्म गृह्णाति। तथा तेनैव प्रकारेण तमसि तमोगुणप्रवृद्धौ सत्यां प्रलीनः मृत्युं प्राप्तः सन् मूढयोनिषु पशुस्थावरयोनिषु जायते उत्पन्नो भवति।

(मू. गी.) रजसि प्रलयं गत्वा कर्मसंगिषु जायते।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥१५॥

(वेदगी.) यत् ते नियानं रजसं मृत्यो अनवधर्ष्यम्।
पथ इमं तस्माद् रक्षन्तो ब्रह्मास्मै वर्म कृण्मसि ॥१०॥
अथ. कां. ८ सू. २ मं. १०

यत्ते इति = हे मृत्यो! हे मरणशील संसारिन्! यत् यदा ते तव अनवधर्ष्यम् सत्वतमसोर्मध्ये केनाऽपि गुणेन धर्षितुम् अशक्यम् रजसं रजोगुणसम्बन्धि नियानं मार्गः भवति। तदा तस्मात् उक्तलक्षणात् पथः मार्गात् इमं त्वां संसारिजीवं रक्षन्तः बहवः तत्त्वज्ञानिनः पुरुषाः अस्मै रजोगुणलीनाय पुरुषाय ब्रह्म परिवृढं शान्तिप्रदायकं वैदिककर्मप्रतिपादकमंत्रसमूहं वर्म रक्षकं कवचं कृण्मसि कुर्मः। अर्थात् कर्मठः जीवो भवतीति भावः ॥१०॥

कर्मण इति= सुकृतस्य सुकृतं सुकृतं पुण्यं तस्य सुकृतस्य पुण्यस्य कर्मणः सात्त्विकं सत्त्वगुणेनपर्वं हितं निर्मलं दुःखरहितं फलम् आहुः ब्रह्मविदः कथयन्ति। रजसः रजोगुणस्य कर्मणः फलं दुःखं तमसः तमोगुणस्य कर्मणः फलम् अज्ञानं प्रमादनिद्रालस्यादिकम् आहुः कथयन्ति ॥१६॥

(मू॰गी॰) कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम्।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥१६॥

(वेदगी॰) ये अर्वाञ्चस्ताँ उ पराच आहुर्ये पराञ्चस्ताँ उ अर्वाच आहुः।
इन्द्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो वहन्ति ॥१९॥

ऋ॰ मं॰ १ सू॰ १६४ मं॰ १९ अथ॰ कां॰ ९ सू॰ ९ मं॰ १९ यद्वा "नूतनः मंत्रः — त्रिः आत्मन्यवेर्णाम्। अपाजैत् कृष्णां रुशतीं पुनानो या लोहिनी तां ते अग्नौ जुहोमि॥" अथ॰ कां॰ १२ सू॰ ३ मं॰ ५४

अर्थ= हे जीवात्मन्! ये जीवात्मानः अर्वाञ्चः तमसि स्थिताः सन्ति, तान् तामसान् जीवान् उ एव पराचः दूरस्थान् अर्थात् सन्मनुष्ययोनितः दूरस्थान् आहुः कथयन्ति। ये जीवात्मानः (पराञ्चः) तमोगुणयोनितः दूरस्थाः सन्ति तान् उ तानेव (अर्वाचः) परमात्मसमीपस्थान् आहुः सात्त्विकाः पुरुषाः कथयन्ति। हे सोम! हे शान्तिमयसत्त्वगुणविशिष्टजीवात्मन्! त्वम् च इन्द्रः रजोगुणैश्वर्यसम्पन्नः पुरुषः या= यानि कर्माणि चक्रथुः कुर्वन्तौ। (तानि कर्माणि धुरा युक्ता न धुरासम्मेलकान् इव रजसः रजोगुणसमीपस्थान् वहन्ति धारयन्ति ॥१९॥ यद्वा

अर्थः आत्मन् आत्मज्ञानी अर्थात् सात्त्विकः पुरुषः अन्य वर्णं सत्त्वगुणादिं नं स्वरूपं अपि वेद वेत्ति, रुशतीं ~~सत्त्वगुणेन अस्य~~ सत्त्वगुणजन्यप्रकाशेन प्रकाशमानो स्वां तनूं पुनानः पवित्रीकुर्वन् कृष्णां कृष्णवर्णवत् तमोगुणम् अपाजैत् दूरीकुरुते। या लोहिनी यः रक्तगुण ~~अर्थः~~ रजोगुणोऽस्ति तां तमोगुण ते तव परमात्मनः अग्नौ तेजसि जुहोमि हवनं करोमि॥

सत्त्वादिति — सत्त्वात् सत्त्वगुणात् ज्ञानं सदसद्वस्तुविवेकः संजायते समुत्पद्यते। रजसः रजोगुणात् लोभः वस्तुप्राप्त्यभिलाषा जायते। तमसः तमोगुणात् प्रमादमोहौ विस्मृतिः सदसद्वस्तुविवेकाऽभावश्चैव भवतः॥

(मू. गी.) सत्त्वात् संजायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ तमसः भवतोऽज्ञानमेव च॥१७॥

ऊर्ध्वमिति = सत्वस्थाः सत्वे गुणे तिष्ठन्तीति सत्वस्थाः पुरुषाः ऊर्ध्वं ब्रह्मविष्ण्वादिस्थानं समुच्चतर ब्रह्मादियोनिं वा गच्छन्ति यान्ति। राजसाः रजोगुणे वर्तमाना जनाः मध्ये देवलोके मनुष्यलोके नृपादिक्षत्रिययोनौ तिष्ठन्ति प्रादुर्भवन्ति। जघन्यगुणवृत्तिस्थाः जघन्यो निकृष्टः गुणः तमोगुणः तस्य वृत्तिः व्यवहारः तस्यां जघन्यगुणवृत्तौ तिष्ठन्तीति जघन्यगुणवृत्तिस्थाः तामसाः पुरुषाः कृत्याऽकृत्यविवेकशून्याः अधोगच्छन्ति नरके तिर्यग्योनौ वा गच्छन्ति ॥१८॥

(मू.गी.) ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणवृत्तिस्थाः अधो गच्छन्ति तामसाः ॥१८॥
(वेदगी.) वरणेन प्रव्यथिता भ्रातृव्या मे सबन्धवः।
असूर्तं रजो अप्यगुस्ते यन्त्वधमं तमः ॥९॥

अथ. १० कां. ३ सू. मं. ९ यद्वा "तिस्रो ह प्रजा अत्यायमायन्न्यन्या अर्कमभितोऽविशन्त।
बृहन्ह तस्थौ रजसो विमानो हरितो हरिणीरा विवेश", अथ. कां. १. सू. ८ मं. ३

वरणेनेति = हे विद्वन्! वरणेन = सर्वैः वरितुं योग्येन श्रेष्ठतमेन वा सत्वगुणेन मे मम परमात्मजिज्ञासोः सबन्धवः बन्धुभ्यां रजस्तमोभ्यां सहिताः भ्रातृव्याः शत्रवः पराङ्मुखकर्तारः शत्रवः कर्मरूपो ध्यानरूपः प्रव्यथिताः दुःखिताः अभवन्। रजः रजोगुणविशिष्टाः पुरुषाः अपि असूर्तम् अन्धकारात्मकं जगत् अगुः प्राप्नुवन्ति। ते तमः = तमोगुणविशिष्टाः ते पुरुषाः अधमम् अधोलोकं यन्तु प्राप्नुवन्तु। पुरुषव्यत्ययः ॥९॥ यद्वा "तिस्र इति = हे जीवात्मन्! ह इति निश्चये (तिस्रः = त्रिविधाः प्रजाः अत्यायम् लोकं लोकान्तरं अतिक्रमणं प्राप्नुवन्ति। अन्या एका सत्वगुणविशिष्टा प्रजा अर्कम् सूर्यलोकम् अर्थात् सूर्यवत्प्रकाशमानमूर्ध्वलोकं यद्वा सर्वैः अर्च्यं नीयं परमात्मानम् अभितः सर्वथा न्यविशन्त प्रविशन्ति। अपरया प्रजा अर्थात् रजोगुणविशिष्टा प्रजा विमानः विशेषेण स्वयं नीयमहत्वस्थानम्ध्य धारयन् ह निश्चयोऽस्ति तस्थौ तिष्ठति। हरिणीः = सर्वान् शुभगुणान् शुभकर्माणि च हरन् विनाशयन्निति यावत् हरितः हरिद्वर्णः भवति अर्थात् नीचवर्णः भवति ॥३॥

नान्यमिति = यदा यस्मिन् काले द्रष्टा आत्मा गुणेभ्यः गुणकार्यभूतेभ्यः देहेन्द्रियादिभ्यः अन्यं भिन्नं कर्तारं न अनुपश्यति न विलोकयति कर्तृत्वादिकं प्रकृतिगुणं पश्यति। गुणेभ्यः गुणकार्येभ्यः अहंकारादिभ्यः परं विलक्षणं वेत्ति जानाति। सः पुरुषः मद्भावं मत्स्वरूपं अधिगच्छति ॥ १९ ॥

(मू.गी.) नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥१९॥

(वेदगी.) तं प्रजनयता ... ऋ० ५।४४।१

. . . . . . . . . . . . .

एतन्मंत्रव्याख्या ४८५ पृष्ठे द्रष्टव्या —

गुणानिति= देही ब्रह्मवित् पुरुषः देहसमुद्भवान् देहस्य समुद्भवः उत्पत्तिर्येभ्यः तान् देहसमुद्भवान् देहस्योत्पादकान् एतान् त्रीन् सत्त्वरजस्तमोगुणान् अतीत्य उल्लंघ्य जन्ममृत्युजरादुःखैः आत्मनः देहसम्बन्धः जन्म, आत्मनः देहात् निःसरणं मृत्युः जरा= देहस्य शीर्णता, जन्ममृत्युजराजन्यैः दुःखैः विमुक्तः अस्पृष्टन् सन् अमृतं विदेहकैवल्यम् अपवर्गं अश्नुते प्राप्नोति २०

(मू० गी०) गुणानेतानतीत्य त्रीन् देही समुद्भवान् (देह)।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥२०॥

(वेदगी०) त्रयः सुपर्णास्त्रिवृता यदायन्नेकाक्षरमभिसंभूय शक्राः।
प्रत्यौहन्मृत्युममृतेन साकमन्तर्दधाना दुरितानि विश्वा ॥ अथ० कां० ५ सू० २८ मं० ८

अर्थ- त्रय इति= त्रयः सत्त्वरजस्तमो गुणाः सुपर्णाः स्वविषये पतनशीलाः त्रिवृताः राग लोभमोहैः त्रिभिः वृताः युक्ताः शक्राः सकलद्रव्यधर्मिते पूर्णिया शक्ताः ~~[illegible]~~ आयन संसारे प्राप्ताः सन्ति। यद्= इति यस्मिन् काले प्रकृतिगुणविवेकिनः मुमुक्षवः जनाः जानन्ति। तदा एकाक्षरं= एकमवि नाशिनं आत्मानं अभिसंभूय संप्राप्य अमृतेन अमरणशीलेन आत्मना विश्वा- विश्वानि सर्वाणि दुरितानि पापपुण्यजन्य जन्ममृत्युजरादुःखानि ~~[illegible]~~ युगपदेव अन्तर्दधानाः विनाशयन्तः मृत्युं प्रत्यौहन् स्ववशीकुर्वन्ति ॥ ८॥

अर्जुन उवाच = हे प्रभो! हे स्वामिन्! एतान् त्रीन् त्रिसंख्याकान् गुणान् अतीतः समतिक्रम्य वर्तमानः कैः लिङ्गैः कैः चिन्हैः भवति, किमाचारं लौकिकवैदिककर्मसु किमाचरनं एतान् त्रीन् गुणान् कथं केन प्रकारेण अतिवर्तते केनोपायेन गुणत्रयातिक्रमणं करोति॥ २१॥

(मू. गी.) अर्जुन उवाच। कैर्लिङ्गैस्त्रीन् गुणानेतान् अतीतो भवति प्रभो।
किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते॥ २१॥

(वेदगीता) तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम्।
प्रतीचीनं वृजनं दोहसे गिराऽऽशुं जयन्तमनु यासु वर्धसे॥ ऋ. मं. ५ सू. ४४ मं. १

ऋ. ५/४४/१ उक्त मंत्र व्याख्या –
अर्थ = तमिति = यः जिज्ञासुः (तं) द्रष्टारं आत्मानं (प्रत्नथा) पुराणवत्, पूर्वथा = सर्वपूर्ववत्, विश्वथेमथा विराड्वत् ज्येष्ठतातिं = सर्वश्रेष्ठं, बर्हिषदं = महत्पदे स्थितं महान्तमिति यावत्, स्वर्विदम् = सूर्यादिज्योतिषामपि वेत्तारं प्रतीचीनं सर्वेभ्यः प्राचीनं वृजिनं बलवन्तं "बलमसि बलं मयि धेहि" इत्युक्तेः (गिरा) स्तुत्या दोहसे (दोग्धि) यासु स्तुतिषु आशुं सर्वव्यापकं जयन्तं जयशीलं ~~परमात्मानं~~ आत्मानं वर्धसे वर्धितं करोति॥ १॥

प्रकाशमिति = हे पाण्डव! हे पाण्डुपुत्र! हे अर्जुन! यः पुरुषः प्रकाशं सत्त्वगुणोद्भवं विषयजन्यं सुखं, तथा प्रवृत्तिं रजोगुणसमुद्भवं विषय प्रवृत्तिं च पुनः मोहं तमोगुणजन्यं सर्वं विकारश्च संप्रवृत्तानि सम्यक् तया प्रवृत्तिं प्राप्तानि सत्त्वरजस्तमोगुणकार्यभूतानि, न द्वेष्टि द्वेषबुद्ध्या न पश्यति। तथा निवृत्तानि निवृत्तिं प्राप्तानि च न काङ्क्षति नेच्छति २२ **उदासीनवदिति** = उदासीनवत् तटस्थ पुरुष इव आसीनः प्रवृत्तिनिवृत्त्योः दूरे वर्तमानः यः गुणैः गुणकार्यैः प्रकाशरागमोहैः न विचाल्यते स्वस्वाकारवृत्त्याः न प्रच्याव्यते। गुणाः सत्त्वरजस्तमोगुणाः अयं एव देहकार्यापि यथासमयं गुणेषु वर्तन्ते इत्येवंरूपः योऽवतिष्ठति न इङ्गते गुणकार्येभ्यः न चलति २३ **समदुःखसुख इति** = दुष्टानि खानि इन्द्रियाणि यत्रेति दुःखम्, सुशोभनानि खानि इन्द्रियाणि यत्र तत् सुखम्। दुःखञ्च सुखञ्च सुखदुःखे, ते समे तुल्ये दुःखसुखे यस्य स समदुःखसुखः सुखे दुःखे च एकरसः। स्वस्थः स्वे आत्मनि तिष्ठतीति स्वस्थः, सम लोष्टाश्मकाञ्चनः लोष्टं मृत्पिण्डम् अश्म पाषाणः काञ्चनं सुवर्णं लोष्टं च अश्म च काञ्चनञ्च लोष्टाश्मकाञ्चनानि समानि तुल्यानि लोष्टाश्मकाञ्चनानि यस्य स समलोष्टाश्मकाञ्चनः। तुल्यप्रियाऽप्रियः प्रियम् अभिमतम् अप्रियम् अनभिमतं प्रियञ्च अ प्रियञ्च प्रियाप्रिये तुल्ये प्रियाप्रिये यस्य सः तुल्यप्रियाऽप्रियः। धीरः धियं राति निगृह्णातीति धीरः। तुल्यनिन्दात्मसंस्तुतिः = निन्दा परदोषाऽऽविष्करणम् आत्मस्तुतिः स्वश्लाघा, निन्दा च आत्मसंस्तुतिश्च निन्दात्मसंस्तुतिः, तुल्ये निन्दात्मसंस्तुती यस्य सः तुल्यनिन्दात्मसंस्तुति २४ **मानावमानयोरिति** = मानम् आदरः अवमानम् अवहेलनं तयोः मानाऽवमानयोः तुल्यः एकरसः। मित्राऽरिपक्षयोः मित्रपक्षे अरिपक्षे शत्रुपक्षे च तुल्यः समः। सर्वारंभपरित्यागी = एतेन कर्मणा ममैतत् शुभं भविष्यतीति आरंभः क्रिया सर्वे आरंभाः सर्वारंभाः, तेषां परित्यागः सर्वारंभपरित्यागः स एव शीलमस्येति सर्वारंभपरित्यागी, स गुणाऽतीतः प्रकाशरागमोहाऽतीतः उच्यते कथ्यते ॥२५॥

श्रीभगवानुवाच।
**(मू. गी.) प्रकाशञ्च प्रवृत्तिञ्च मोहमेव च पाण्डव। न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥२२॥ उदासीनवदासीनो गुणैर्यो न विचाल्यते। गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥२३॥ समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः। तुल्यप्रियाऽप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥२४॥ मानाऽवमानयोस्तुल्य**

तुल्यो मित्रारिपक्षयोः। सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥२५

(वेदगी·) दृते दृंह मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्, ॥ यजुः ३६।१८

"प्र तुविद्युम्नस्य स्थविरस्य घृष्वेर्दिवो ररप्शे महिमा पृथिव्याः।
नास्य शत्रुर्न प्रतिमानमस्ति न प्रतिष्ठिः पुरुमायस्य सह्योः ॥१२॥
ऋ· अष्ट·४ अध्या·६ व·६ मं·१२ (ऋ· मं·६ सू·१८ मं·१२)

"ते अज्येष्ठा अकनिष्ठास उद्भिदोऽमध्यमासो महसा वि वावृधुः।
सुजातासो जनुषा पृश्निमातरो दिवो मर्या आ नो अच्छा जिगातन ॥६॥
ऋ· अष्ट·४ अध्या·३ व·२४ मं·६ (मं·५ अनु·५ सू·५९ मं·६)

दृते इति=हे परमात्मन्! दृते=दृ विदारणे जरया विदीर्णेऽपि शरीरे मा मां दृंह स्वपदप्राप्तये दृढीकुरु। सर्वाणि भूतानि प्राणिमात्राणि मा द्वेषादिद्वन्द्वरहितं मां मित्रस्य सुहृदः चक्षुषा दृष्ट्या समीक्षन्ताम् सम्यक्तया पश्यन्तु। 'अहं गुणातीतः सन् मित्रस्य चक्षुषा मित्रस्य दृष्ट्या सर्वाणि भूतानि सकलान् जीवान् समीक्षे सम्यक्तया पश्येयम्' शान्तं हि मित्रस्य चक्षुः न वै मित्रं कश्चन हिनस्ति। एवमाहिंस्यमानाः अहिंसन्तश्च परस्परम् अद्रोहेण सर्वथा मित्रस्य चक्षुषा समीक्षामहे पश्याम ॥१८॥ प्र तुविद्युम्नस्येति=तुविद्युम्नस्य तुवि बहु द्युम्नं यशो यस्य तथाभूतस्य बहुयशसः, स्थविरस्य सर्वतो गुणातीतत्वे प्रसिद्धस्य घृष्वेः लोभमोहादिशत्रुघर्षकस्य शत्रुनाशकस्य गुणातीतस्य महिमा महत्त्वं दिवः द्युलोकादारभ्य पृथिव्याः भूमेश्च प्ररप्शे प्रदिश्चे अतिशयत्वेन वर्तते। पुरुमायस्य बहुप्रज्ञस्य सह्योः गुणत्रयाभिभवितुः अस्य उदासीनस्य पुरुषस्य शत्रुः शातयिता वैरी नास्ति। अस्य प्रतिमानं तुल्यः नास्ति अस्य प्रतिष्ठिः कश्चित् ~~तुल्ये~~ गुणेऽपि आश्रयकर्ता नास्तीति ॥१२॥ ते अज्येष्ठा इति=ते समदुःखसुखाः तेजीवाः अज्येष्ठाः कस्मादपि स्वं ज्येष्ठं न मन्यन्तेऽतः अज्येष्ठास्तेऽकनिष्ठासः समवृत्तित्वात् स्वं कनिष्ठं न मन्यन्तेऽतः अकनिष्ठासः

सन्तः अज्येष्ठासः अकनिष्ठासः — सन्तः अद्रिदः उद्भुतानीचतात्मशत्रूणाम् उद्भेदयितारः। अमध्यमासः मध्यमताशून्याः अतः सर्वप्रकारैः समाः, महसा समतेजसा विवावृधुः विवर्धन्ते। सर्वोत्कृष्टत्वेन वर्तन्ते। हे मर्याः! हे मनुष्याः! ये सुजातासः मित्राऽरिपक्षशून्यत्वेन सुष्ठु संभूताः जनुषा जन्मना पृश्निमातरः पृश्निः पालकः ईश्वर एव माता ज्ञानप्रदाता अनुमापको वा येषां ते पृश्निमातरः सन्ति तान् दिवः आगतान् दैवीजीवान् अच्छ सम्यक्तया आजिगातन जानीत अथवा ते नोऽस्मान् अच्छप्राप्नुवन्तु ॥६॥

मामिति – यः मुमुक्षुः पुरुषः मां परमात्मानम् अव्यभिचारेण व्यभिचारशून्येन एकरसेन भक्तियोगेन सेवते ध्यायति। सः पुरुषः एतान् सत्वादिगुणान् समतीत्य सम्यक्तयाऽतिक्रम्य ब्रह्मभूयाय ब्रह्मभावाय कल्पते शक्तो भवति॥२६॥

(मू. गी.) मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते॥२६॥

(वेदगी.) इमे नरो वृत्रहत्येषु शूरा विश्वा अदेवीरभि सन्तु माया।
ये मे धियं पनयन्त प्रशस्ताम्॥

ऋ. अष्ट. ५ अध्या. १ व. २४ मं. १ (मं. ७ अनु. १ सू. १ मं. १)

इमे इति – ये मनुष्याः मे मदीयां प्रशस्तां प्रकर्षेण श्रेष्ठां धियं ध्यानात्मिकां भक्तिं स्तुतिं वा पनयन्त ब्रुवन्ति स्तुवन्ति वा। ते इमे मयि स्निग्धाः नरः मनुष्याः वृत्रहत्येषु पापविनाशनकर्मसु शूराः प्रवीणाः सन्तः अदेवीः आसुरीः विश्वाः सर्वाः मायाः गुणत्रयोद्भवाः विचारशक्तीः अभिसन्तु अभिभवन्तु॥२६॥

ब्रह्मण इति=अहं परमात्मैव अमृतस्य अमरणधर्मस्य अव्ययस्य वृद्धिक्षयरहितस्य ब्रह्मणः निर्विशेषब्रह्मस्वरूपस्य वेदस्य वा प्रतिष्ठा स्थितिस्थानमस्मि। अहञ्च शाश्वतस्य नित्यस्य धर्मस्य जन्ममरणदुःखप्रवाहे पात्यमानः पुरुषो ध्रियतेऽनेनेति धर्मः ज्ञानं प्रकृतिपुरुषविवेकः तस्य प्रतिष्ठा स्थितिस्थानम् अस्मि। तथा ऐकान्तिकस्य अत्यन्तमिदमेवेति निश्चीयतेऽनेन इति अन्तः, एकश्चासौ अन्तः इत्येकान्तः एकेप्रत्ययः तेन अवगम्यते इत्यैकान्तिकं तस्य ऐकान्तिकस्य सुखस्य आनन्दस्वरूपस्य सुखस्य प्रतिष्ठा आश्रयोऽस्मि २६

इति श्री जगन्नाथशास्त्रिसंकलितायां गीतावेदार्थबोधिन्यां चतुर्दशोऽध्यायः समाप्तः॥१४॥

(मू॰गी॰) ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च॥२६॥
इति श्रीमद्भग॰ ब्रह्म॰ गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः
(वेदगी॰) स इत्तन्तुं स विजानात्योतुं स वक्त्वान्यृतुथा वदाति।
य ईं चिकेतदमृतस्य गोपा अवश्चरन्परो अन्येन पश्यन्॥४॥
ऋ॰ अष्ट॰ ४ अध्या॰ ५ व॰ २१ मं॰ ४ (मं॰ ६ अनु॰ १ सू॰ ९ मं॰ ३) अथापि "विशि राजा प्रतिष्ठितः, धर्मोऽस्मि—" यजुः २०।९

स इति=सः परमात्मा इत् एव तन्तुं तन्तुस्थानीयानि सूक्ष्मभूतानि विजानाति नान्यः कश्चित्। तथा स एव ओतुम् ओतुस्थानीयानि स्थूलभूतानि विजानाति। स एव वक्त्वानि वक्तव्यानि उपदेष्टव्यानि इमानि छन्दांसि ऋतुथा सृष्ट्यादौ उपदेष्टव्यकाले वदाति वदति। अत एव स एव वेदस्य प्रतिष्ठाऽस्ति। यः परमात्मा अमृतस्य विनाशरहितस्य धर्मस्य ऐकान्तिकस्य आनन्दमयसुखस्य गोपाः रक्षकः अस्ति। यश्च अवः अवस्तात् संसारदशायां चरन् सर्वव्यापकत्वेन संचरन् परः अविद्याऽस्मितादिभ्यः परस्तात् अन्येन सच्चिदानन्दलक्षणेन रूपेण पश्यन् सर्वं जगत् अवलोकयन् प्रकाशयन् वा ईम् धर्मसुखप्रतिष्ठां चिकेतत् जानाति॥४ —अथापि ×

इति श्री सारस्वतान्वयलौगाक्षिलब्धन्यायभूषण जगन्नाथशास्त्रिज्योतिर्विद् ओ॰ टी॰ कृतायां वेदगीतार्थबोधिन्यां चतुर्दशोऽध्यायः समाप्तः॥१४॥

×विशि सर्वासु प्रजासु राजा प्रकाशं कुर्वन् विराजमानो वा धर्मः प्रतिष्ठितः ~~सम्यक् स्थितः~~ धर्मोऽस्मि॥

"यस्य निःश्वसितं वेदः यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनः प्राप्तः कुरुक्षेत्रे प्रदर्शनम्" १
वेदो गीता तथा गीता वेद एव न संशयः। वेदगीतापृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनात्" २

श्रीभगवानुवाच 'ऊर्ध्वमूलमिति' सर्वोत्कृष्टत्वादूर्ध्वं ब्रह्मेत्युच्यते। ऊर्ध्वं ब्रह्म मूलं मूलकारणं बीजं यस्य तथाभूतम्। अधः शाखम् अव्यक्तात् क्रमशः महदादयः आविर्भवन्ति। सर्वे कार्यपदार्थाः प्रकृतेरधःस्थाः सन्ति, अतः अधोऽधः शब्दवाच्या महदादयः शाखा इव शाखा यस्य सोऽयमधःशाखः तमधःशाखम् अश्वत्थम् श्वोऽपि न तिष्ठतीति अश्वत्थः क्षणभङ्गुरः तम् अश्वत्थं संसाराश्वत्थवृक्षम् अव्ययः व्ययो नाशः तद्रहितम् अव्ययं नित्यं ब्रह्मरूपत्वादित्यमाहुः। यद्वाऽनादिप्रवाहत्वादित्यमाहुः। छन्दांसि ऋग्यजुःसामादीनि यस्य संसारवृक्षस्य पर्णानीव पर्णानि पत्राणि सन्ति। यः तम् एतं वेदपलाशं संसाराऽश्वत्थवृक्षं समूलं वेदजानाति सः वेदवित् स वेदार्थज्ञाताऽस्ति ॥१॥

श्रीभगवानुवाच

(मू.गी.) ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥१॥

(वेद.म.) अश्वत्थो देवसदनस्तृतीयस्यामितो दिवि।
तत्राऽमृतस्य चक्षणं ततः कुष्ठोऽजायत ॥६॥
अथ. कां.५ अनु.१ सू.४ कां.६ सू.९५ कां.१९ अनु.५ सू.३९ मं.६

अश्वत्थ इति = इतोऽस्याः दृश्यमानायाः सृष्टेः तृतीयस्यां तृतीयस्मिन् स्थाने अहंकारमहतोः परम् अव्यक्तम् अस्ति। अतः दिवि द्योतमाने तृतीये स्थाने देवसदनः देवस्य परमात्मनः सदनं वासः यत्र तथाभूतः परमात्मवासस्थानभूतः अश्वत्थः संसाराऽश्वत्थवृक्षः अस्ति। तत्र संसाराऽश्वत्थवृक्षे अमृतस्य अमरणधर्मकस्य परमात्मनः चक्षणं प्रकाशनं स्फुटीभावो विद्यते। ततः तस्मात् कारणात् कुष्ठः कवते व्याप्नोतीति कुः, कौ सर्वव्यापके ब्रह्मणि तिष्ठतीति कुष्ठः ब्रह्मवित् अजायत भवति ॥६॥

अध इति: तस्य संसाराऽश्वत्थस्य शाखाः पापपुण्यफलस्वरूपाः देहाः, गुणप्रवृद्धाः गुणैः सत्वरजस्तमोभिः प्रकर्षेण वृद्धिं प्राप्ताः विषयप्रवालाः विषयाः रूपरसादयः पदार्थाः प्रवालाः अङ्कुराः यत्र तथाभूताः शाखाः अधश्चोर्ध्वं मनुष्यलोकादारभ्य ब्रह्मलोकपर्यन्तम् प्रसृताः सर्वतो व्याप्ताः सन्ति। मनुष्यलोके मृत्युलोके कर्मानुबन्धीनि बहुविधशरीरारम्भकाणि कर्माणि अनुबध्नन्ति स्वोत्पत्तेरनन्तरमेव कारयन्तीति कर्मानुबन्धीनि मूलानि मूलस्वरूपाणि अधश्च स्थूललिङ्गशरीरेषु अनुसन्ततानि प्राणि कर्मानुरूपेण सर्वतः व्याप्तानि सन्ति ॥ २॥

(मू· गी·) अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः।
अधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके ॥ २॥

(वेद·मं·) अयं लोको जालमासीच्छक्रस्य महतो महान्।
तेनाहमिन्द्रजालेनामूंस्तमसाऽभिदधामि सर्वान् ॥ ८॥
अथ· कां· ८ अनु· ४ सू· ८ मं· ८ ॥

अयमिति = हे जीवात्मन्! शक्रस्य सर्वकार्येषु शक्तस्य महतः सर्वैः पूजनीयस्य सर्वोत्कृष्टस्य वा मम परमेश्वरस्य अयं लोकः अयं संसाराऽश्वत्थवृक्षः जालम् जालवत् सत्त्वरजस्तमोगुणैः अधः ऊर्ध्वं प्रसृतः सर्वतः व्याप्तः अस्ति। अहं कर्मफलप्रदाता परमात्मा तेन कर्मानुबन्धेन इन्द्रजालेन इन्द्रजालवत्कौतुकेन ब्रह्माण्डोत्पत्तिसमसर्वान् अमून् प्राणिनः तमसा स्वस्वकर्ममोहेन अभिदधामि संयोजयामीति ॥ ८॥

*"सप्त प्राणा नद्यौ मन्यस्तांस्ते वृश्चामि ब्रह्मणा। अर्या यमस्य सादनमग्निदूतो अरंकृतः" अथ. कां. २ सू. १२ मं. ७
अहं परमात्मा ब्रह्मणा ज्ञानेन ते तव भक्तस्य सप्त प्राणान् = "प्राणा इन्द्रियाणि" ताण्ड्य ब्रा. २।१४।२ "सप्त शिरसि प्राणाः" ताण्ड्य ब्रा. २२।४।३ "सप्त वै शीर्षन् प्राणाः" शत. ब्रा. ९।५।२।८ ऐ. ब्रा. १।१७ तै. १।२।३।३ सप्तेन्द्रियाणि (नेत्रे, नासिके, श्रुत्यौ) वा "कर्णत्वङ्नेत्ररसनाघ्राणपायूपस्थानि" एषां विषयांश्च तथा (अष्टौ मन्यः) अष्टौ धमनीन् "गुदानाभ्युदरहृदयकण्ठतालुभ्रूमध्यमस्तिष्कवर्तिनः"

न रूपमिति = इहास्मिन् लोके अस्य संसारवृक्षस्य तथा "ध्रुवा द्यौः ध्रुवा पृथिवी" इतिप्रकारेण प्रतिपादितं रूपं यदस्ति। तत् तेनैव प्रकारेण तद्रूपं न उपलभ्यते सूक्ष्मबुद्धिभिः पण्डितैः न प्रत्यक्षीक्रियते अस्य संसारवृक्षस्य अन्तः समाप्तिः न चादिः जन्मस्थानं न च संप्रतिष्ठा मध्यकालीना स्थितिः उपलभ्यते। सुविरूढमूलं सम्यक्तया विशेषेण च दृढमूलम् एनम् अश्वत्थं संसाराऽश्वत्थवृक्षम् असंगशस्त्रेण संगो वैषयिको रागः न संगः असंगः विरागः स एव शस्त्रं तेन दृढेन असंगशस्त्रेण छित्वा विदार्य, ततस्तदनन्तरं तत्पदं तद्ब्रह्मपदं परिमार्गितव्यम् अन्वेषणीयम्। यस्मिन् पदे गताः प्राप्ताः जीवाः भूयः न निवर्तन्ति पुनः संसाराय न निवर्तन्ते। तम् आद्यं मूलपुरुषं परमात्मानं प्रपद्ये शरणं गच्छामि। यतः यस्माद् ब्रह्मणः एतस्य संसारवृक्षस्य पुराणी प्राचीना प्रवृत्तिः विस्ताररूपरचना प्रसृता प्रकर्षेण विस्तृताऽस्ति ॥ ३, ४ ॥

(मू. गी.) न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा।
अश्वत्थमेनं सुविरूढमूलमसंगशस्त्रेण दृढेन छित्वा ॥ ३ ॥*
ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः।
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥
(वेद गी.) यं कुमार नवं रथमचक्रं मनसा कृणोः। एकेषं विश्वतः प्राञ्चमपश्यन्
नधितिष्ठसि, १४ ~~यजु~~ ऋ. अष्ट. ८ अध्या. ८ व. २३ मं. ३ मं. १० सू. १३५ मं. ३
ये देवा देवेष्वधि देवत्वमायन् ये ब्रह्मणः पुर एतारो अस्य। येभ्यो न
ऋते पवते धाम किञ्चन न ते दिवो न पृथिव्या अधि स्नुषु। यजुः १७।१४

नास्ति उत्पत्तिस्थितप्रलयात्मकं चक्रं यस्य

यमिति = हे कुमार! कुत्सितः मारः कामो यस्मिन् स कुमारः तत्संबुद्धौ हे कुमार! हे ब्रह्मवेत्तः! सखे! अचक्रं नास्ति आदिमध्यान्तस्थितिचक्रं यस्य सः, तम् अचक्रम् चक्ररहितम् एकेषम् एकः परमात्मा एव ईषास्थानीयः यस्य सः, तथाविधं इदृशं नवं विश्वतः सर्वतः प्राञ्चं प्रकर्षेण गच्छन्तं भूयोभूयः प्राप्तत्वात् नूतनमिव शरीरात्मकं संसारात्मकं वा रथं रथवच्चलन्तं संसाररथं मनसाऽन्तःकरणेन

प्रयाणकाले मन आसन्नमृत्यौ प्रोन्मोक्षे प्राणान् अन्ते च्छित्रोणान्तः अरंकृतेः श्रेष्ठेन अलं ... सेवकः सन् यमस्य सदने यानि ... अयं ... ॥

अकृणोः अकरोः। संकल्पात्मकेन मनसा हि कामो जायते सत्यां हि कामनायां पुण्यापुण्यात्मकं कर्म क्रियते। तेन च भोगप्रदाना-
य इदं शरीरमारभ्यते इति परंपरया संसारनिष्पादकत्वं तं संसारात्मकं रथम् अपश्यन् अजानन् ज्ञानविषयाद् दूरीकुर्वन्
"लक्षणहेत्वोः" इति हेतौ शतृप्रत्ययः। सत्स्वरूपापरिज्ञानाद्धेतोः अधितिष्ठसि भोगायतनत्वेन स्वीकरोषि ॥ ३॥
ये इति = ये देवाः ज्ञानिनः देवेषु अधिदेवत्वं देवाऽधिदेवं परमात्मानम् आयन् संसारवृक्षं (ज्ञानासिना) छित्वा प्राप्नुवन्ति। ये विवेकिनः
अस्य ब्रह्मणः परमात्मनः पुरएतारः अग्रे प्राप्तारः सन्ति। येभ्यः ज्ञानिभ्यः ऋते विना किञ्चन धाम किमपि जन्म
न पवते न पवित्रीभवति। ज्ञानेन ज्ञानिनां जन्म पवित्रं भवतीति सिद्धान्तः। ते विवेकिनः पुरुषाः दिवः सूर्यस्य लोके
न वसन्ति। न च पृथिव्याः पृथिवीप्रदेशेषु अधिवसन्ति। ते न च अधिस्नुषु सु प्रस्नुषु प्रस्नावीणि स्रोतांसि च-
क्षुरादीनि प्राणायतनानि तेषु स्नुषु चक्षुराद्याधारेषु देहेषु वसन्ति किन्तु ब्रह्मणि वर्तन्ते न च भूयः ते संसारे
जन्म गृह्णन्तीति भावः। १४॥

निर्मानमोहा इति= निर्मानमोहाः मानमोहरहिताः, जितसंगदोषाः जिताः स्वायत्तीकृताः संगदोषाः यैः ते जितसंगदोषाः। अध्यात्मनित्याः अध्यात्मम् आत्मज्ञानं, तस्मिन् नित्याः नित्यमेव वर्तमानाः, विनिवृत्तकामाः इच्छाशून्याः सुखदुःखसंज्ञैः शीतोष्णप्रियाप्रियशत्रुमित्रादि सुखदुःखसंज्ञैः द्वन्द्वैः विमुक्ताः रहिताः अमूढाः विवेकिनः जीवाः तत् अव्ययं पदं नित्यं स्थानं मुक्तिधाम परं पदमिति भावः गच्छन्ति

(मू. गी.) निर्मानमोहा जितसंगदोषा अध्यात्मनित्या विनिवृत्तकामाः।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥५॥

(वेदगी.) मर्मृजानास आयवो वृथा समुद्रमिन्दवः। अग्मन्नृतस्य योनिमा ॥१८॥
ऋ. अष्ट. ७ अध्या. १ व. ३१ मं. १८ (मं. ९ सू. ६४ मं. १८) यद्वा
ऋषिं विप्रः पुर एता जनानामृभुर्धीर उशना काव्येन। स चिद्विवेद
निहितं यदासामपीच्यं गुह्यं नाम गोनाम् ॥ साम. उत्तरा. १ प्र. १ मा. मं. ३

मर्मृजानास इति= मर्मृजानासः मर्मृजानाः सुखदुःखादिद्वन्द्वविमुक्तोऽहत्वां स्वात्मानम् अतिशयेन शोधयन्तः आयवः अध्यात्मविचारे गमनशीलाः इन्दवः योगसमाधिना चन्द्रवत् शुभ्राः भक्ताः [×] आयवः जनाः ऋतस्य चराचरप्रपञ्चस्य योनिं मूलकारणं समुद्रं सर्वप्रपञ्चमुद्रणकारकं परमात्मानम् आ अग्मन् गच्छन्तीति। मर्मृजानास= मृजू शौचालंकारयोः "मर्मृज्यागनीगन्तीति च" इति निपातनात् अभ्यासस्य रुगागमः। आङ्पूर्वे अत्र त्र
(यद्वा) ऋषिमिति= ऋषिः अतीन्द्रियद्रष्टा, विप्रः मेधावी पुरः एता जनानां सामान्यमनुष्याणां पुरतो गन्ता ऋभुः स्वयोगसमाधिना उरु भासमानः धीरः सुखदुःखादिद्वन्द्वेषु धैर्ययुक्तः उशना परमात्मानं कामयमानः काव्येन भक्त्या प्रकाशमानः यो भक्तोऽस्ति स चित् स भक्त एव काव्येन स्तोत्रेण विवेद तद् भक्तवत्सलपदं लभते। किं तत्पदम् "आसां गोनां गवां रश्मीनाम् इन्द्रियाणां वा सम्बन्धि अपीच्यं सर्वेषां दर्शनेभ्योऽन्तर्हितं गुह्यं गोपनीयं स्थानं च विवेद लभते॥ २ ॥ (यद्वा) तं त्वा इति= विप्राः मेधाविनः प्राज्ञाः वचोविदः ब्रह्मवाणीज्ञातारः स्तोतारः वा तं तादृशं जगत्प्रसिद्धं धर्णसिं विश्वस्य धर्तारं पालयितारं वा त्वा त्वां परमात्मानं परिष्कृण्वन्ति भक्त्या अलंकुर्वन्ति। आयवः मानमोहसंगदोषादिभिः विरहिताः मनुष्याः त्वा त्वां परमात्मानं मृजन्ति सर्वत्र शोधयन्ति सर्वत्रावलोकयन्तीति भावः ३

× यथा सर्वं मोहजालं छि... सर्वे ... जानन्तः

(मुमुक्षवो)

(यद्वा) तं त्वा विप्रा वचोविदः परिष्कृण्वन्ति धर्णसिम्। सं त्वा मृजन्त्यायवः ॥ ऋ. ... मं. २

मानमोहसंगदोषादिभिः विरहिताः

न तदिति = सूर्यः तद् धाम तत्पदं न भासयते न प्रकाशयति । शशांकः चन्द्रोऽपि तद्धाम न भासयते न च प्रकाशयति । पावकोऽग्निः न च तद्धाम भासयते । भक्ताः यत्पदं गत्वा प्राप्य न निवर्तन्ते न प्रत्यागच्छन्ति । परमं ज्योतिर्मयं तद्धाम तत्पदं मम परमात्मनः अस्ति ॥ ६ ॥

(मू. गी.) न तद्भासयते सूर्यो न शशांको न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥

(वेद गी.) प्र तद्वोचेत् अमृतस्य विद्वान् गन्धर्वो धाम परमं गुहा यत् ।
त्रीणि पदानि निहिता गुहाऽस्य यस्तानि वेद स पितुष्पितासत् ॥ २ ॥
अथ. कां. २ अनु. १ सू. १ मं. २ यद्वा "~~अग्निं तं देवं~~ ऊर्ध्वो यस्यामतिर्भा अदिद्युतत् सवीमनि । हिरण्यपाणिरमिमीत सुक्रतुः कृपात् स्वः ॥"
अथ. कां. ७ सू. १४ मं. २
: द्वेजीवात्मन

प्र तदिति = अमृतस्य न विद्यते मृतं मरणं यस्येति तद् अमृतं ब्रह्म, तस्य अमृतस्य अविनाशिनः परब्रह्मणः विद्वान् जानन् "क्रियाग्रहणं कर्तव्यम्" इति कर्मणः सम्प्रदानत्वात् "चतुर्थ्यर्थे बहुलं छन्दसि" इति षष्ठी । न त्वत्र "कर्तृकर्मणोः कृति" इति कर्मणि षष्ठी । "न लोकाव्ययनिष्ठाखलर्थ—" इति तस्याः प्रतिषेधविधानात् । स्वरूपपदाऽऽधारेण वा सम्बन्धः । अमृतस्य स्वरूपं विद्वान् जानन् । गन्धर्वः गां वेदलक्षणां वाचं धारयतीति गन्धर्वः, वेदपथाऽनुगः योगी तत् ब्रह्मपदं प्रवोचेद् ब्रवीतु । यत् पदं परमं क्रियाफलभूतविनश्वरस्वर्गाद्यपेक्षया उत्कृष्टं धाम पुनरावृत्तिरहितं स्थानम् । गुहा गुहायां हृदयरूपायां कन्दरायां स्थितं यत् तच्च तद् वोचेत् इति सम्बन्धः । अस्य परमात्मनः त्रीणि त्रिसंख्याकानि पदानि गुहा गुहायां निहिता निहितानि सन्ति । यथा छान्दोग्ये "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" छा. उ. ३।१२।६ यद्वा अस्य परब्रह्मणः त्रीणि पदानि = पद्यन्ते गम्यन्ते मुमुक्षुभिः प्राप्यन्ते इति पदशब्देन अंशीभूताः विराड्हिरण्यगर्भादयः उच्यन्ते । गुहा = गूहयति संवृणोति परिच्छिनत्ति परमात्मानम् इति गुहा माया । तत्र निहितानि समष्टिरूपेण उपहितानि । यः शमदमादिसम्पन्नोऽधिकारी तानि तत्पादत्रयोपलक्षितं निष्कलं ब्रह्म वेद । जीवेश्वरोपाधिपरित्यागेन साक्षात्करोति । अथ च तानि विराड्हिरण्यगर्भेश्वरतत्त्वानि वेद प्रण वावयवैः अकारादिभिः व्यष्टिरूपाणां विश्वतैजसप्राज्ञानां समष्टिरूपविराडादितादात्म्यज्ञानपुरःसरं तुरीयं ब्रह्म यो वेद स पितुः जनकस्य अपि पिता कारणभूतः असत् भवति । सर्वज्ञत्वादपि ज्ञानभूतक्लिभावेन स्वस्याऽपि सर्वजगत्कारणत्वोपपत्तेः । गन्धर्वः = "गवि गन् धत्त्रो वा" इति गोशब्दे उपपदात् धत्त्रो वप्रत्ययः । गोशब्दस्य गन् आदेशः । "व्यवहिताश्च" इति प्रोपसर्गस्य व्यवहितक्रियया सम्बन्धः । वोचेत् ब्रूञ् आशीर्लिङि कर्मणि लिङर्थे लिङि अङ् इत्यङ् प्रत्ययः । वचउम् इति उमागमः । निहितानीति निपूर्वात् धाञ् धारणपोषणयोः इति धातोः कर्मणि निष्ठा । "दधातेर्हिः" इति हि आदेशः । "शेश्छन्दसि बहुलम्" इति शेर्लोपः । वेद = विद ज्ञाने "विदो लटो वा" इति तिपो णल् आदेशः ॥ २ ॥ ४९६

यद्वा ऊर्ध्वेति = यस्य परमात्मनः अमतिः अपरिमितं सर्वप्रकाशातीतं भाः तेजः अस्ति, यत्तेजः सवीमनि परमात्मसत्तायां ऊर्ध्वा सर्वोत्कृष्टं भूत्वा अदिद्युतत् प्रकाशते । सुक्रतुः शोभनकर्मा हिरण्यपाणिः तेजोहस्तोऽयं परमात्मा कृपात् स्वशक्तितः स्वकृपातः वा स्वः सुखमयप्रकाशस्वरूपं सूर्यचन्द्राग्न्यादिपदार्थं अमिमीत निर्मितवान् ...

ममेति= जीवलोके संसारे यद्वा जीवैन लोक्यते अनुभूयते इति जीवः लोकः क्षेत्रं तत्र जीवलोके क्षेत्रे मम परमात्मनः अंशः अंश इव अंश एव सनातनः नित्यः जीवभूतः नामरूपव्याकरणाय क्षेत्रज्ञतां गतः मनःषष्ठानि मन एव षष्ठं संख्यापूरकं यत्रेति मनःषष्ठानि प्रकृतिस्थानि प्रकृतिनि मित्तानि त्याज्यदेहनिष्ठानि इन्द्रियाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च कर्षति गमनागमने सहैव नयति ॥७॥

(मू. गी.) ममैवांशो जीवलोके जीवभूतः सनातनः।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥७॥

(वेदगी.) अयुतोऽहमयुतो म आत्माऽयुतं मे चक्षुरयुतं मे श्रोत्रमयुतो मे प्राणोऽ
युतो मेऽपानोऽयुतो मे व्यानोऽयुतोऽहं सर्वः. अथ. कां. १९ अनु. ६ सू. ५१ मं. १

"इमानि यानि पञ्चेन्द्रियाणि मनःषष्ठानि मे हृदि ब्रह्मणा संशितानि।
यैरेव ससृजे घोरं तैरेव शान्तिरस्तु नः." अथ. कां. १९ अनु. १ सू. ९ मं. ५ यद्वा

"अजो ह्यग्नेरजनिष्ट शोकात् सो अपश्यज्जनितारमग्रे" अथ. कां. ४ सू. १४ मं. १ नूतनं मन्त्रं

अयुत इति= अहं परमात्मा अयुतः अन्येन केनापि वस्तुना युतः संस्कृतः नाऽस्मि अपि तु स्वयमेव परिपूर्णः अतएव सनातनः अस्मि। मे मम परमात्मनः आत्मा स्वरूपम् अंशः अयुतः नित्यः जीवभूतः नित्यः परिपूर्णः अस्ति। मे मम चक्षुः दर्शनशक्तिः अयुतं परिपूर्णम् अस्ति। मे मम श्रोत्रं श्रवणशक्तिः अयुतं परिपूर्णम् अस्ति। प्राणोऽपानव्यानाः निःश्वासोच्छ्वासौ अयुताः परिपूर्णाः सन्ति अतः अहं सर्वः सर्वप्रकारेण अयुतः परिपूर्णोऽस्मि ॥१॥ इमानीति= मे मम जीवात्मनः हृदि हृदयप्रदेशे मनःषष्ठानि मन एव षष्ठं षट्संख्यापूरकं यत्र इति मनःषष्ठानि तानि मनः सहितानि इमानि यानि पञ्च ज्ञानेन्द्रियाणि वर्तन्ते। हृदयं हि आत्मनिवासस्थानम्। सुषुप्तिकाले मृत्युकाले वा स्वस्वकारणरहितानि सर्वेन्द्रियाणि आत्मनि लीयन्ते इति हृदीत्युक्तम्। तानि इन्द्रियाणि ब्रह्मणा चेतनेन आत्मना नियंत्रा संशितानि स्वस्वविषयेषु व्यापारितानि। यैरेव इन्द्रियैः घोरं पापाऽवहं कर्म ससृजे सृष्टं। तैरेव इन्द्रियैः सृष्टस्य घोरकर्मणः नः अस्मदर्थं शान्तिः शमनम् अस्तु ॥५॥ यद्वा "अजः जीवात्मा अग्नेः सर्वप्रकाशकज्योतिःस्वरूपपरमात्मनः शोकात् ज्ञानमय तेजसः अजनिष्ट प्रादुर्भूतः। स जीवात्मा अग्ने स्वतः प्रथमं जनितारं स्वप्रकटयितारं परमात्मानम् अपश्यत निरीक्षते। तेन तेन हेतुना मेधाविनः ज्ञानिनः सन्तः सोहानं उच्चपदवीं ब्रह्मधाम रुरुहुः प्रापुर्वन्ति। यस्मात् ताः जीवाः तस्मिन् प्रविशन्तीति भावः।

…= ईश्वरः देहेन्द्रियादेः प्रवृत्तिहेतुत्वात् तत्स्वामी जीवः यत् तु यदा तु शरीरम् अवाप्नोति प्राप्नोति । यत् च अपि यदा च शरीरम्
…मति उपात्तदेहात् निष्क्रामति तदाऽयं जीवात्मा वायुरिव आशयात् पुष्पवाटिकायाः गन्धान् अतिसूक्ष्मान् कुसुमाऽवयवान्
…तानि मनः प्राणेभ्ये न्द्रियाणि गृहीत्वा आदाय संयाति शरीरान्तरं गच्छति ॥ ८ ॥

(मू०गी०) शरीरं यदवाप्नोति यच्चाऽप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥

(वेद०गी०) ध्रुवं ज्योतिर्निहितं दृशये कं मनो जविष्ठं पतयत्स्वन्तः ।
विश्वे देवाः समनसः सकेता एकं क्रतुमभिवियन्ति साधु ॥ ५ ॥
ऋ० अष्ट० ४ अध्या० ५ व० ११ मं० २ (मंड० ६ अनु० १ सू० ९ मं० ५)

शरीरान्तरं

ध्रुवमिति = पतयत्सु " गच्छत्सु प्राणेषु अन्तर्मध्ये हृदये मनोजविष्ठं मनसोऽप्यतिशयेन वेगयुक्तं ध्रुवं नित्यं ज्योतिः ब्रह्म चैतन्यम्
जीवम् आत्मस्वरूपं निहितं न केनचित्स्थापितं किन्तु स्वकर्मणा स्थितं कं किमर्थं केन प्रकारेण दृशये दर्शनार्थं विश्वे देवाः
दीव्यन्तीति देवाः इन्द्रियाणि विश्वे सर्वे देवाः सर्वाणि इन्द्रियाणि चक्षुरादीनि समनसः मनसा सह वर्तमानाः सकेताः -
सतेजस्काः स्वस्वविषयसहिताः सन्तः एकं मुख्यं क्रतुं जीवात्मानं साधु सम्यक् अभिवियन्ति सम्मुखम् अभिगच्छन्ति
"तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" बृहदारण्यकम् ॥

श्रोत्रमिति = अयं जीवात्मा श्रोत्रचक्षुस्त्वगरसनाघ्राणेन्द्रियम् च तथा मनः अधिष्ठाय उपादाय विषयान् शब्दादीन् उपसेवते उपलभते॥

(मू. गी.) श्रोत्रं चक्षुः स्पर्शनञ्च रसनं घ्राणमेव च।
अधिष्ठाय मनश्चायं विषयानुपसेवते॥ ९॥

(वेद गी.) प्राणापानौ चक्षुः श्रोत्रमक्षितिश्च क्षितिश्च या।
व्यानोदानौ वाङ्मनः शरीरेण त ईयन्ते॥ २९॥ — अथ. ११।८।२९
या आपो याश्च देवता या विराड् ब्रह्मणा सह
शरीरं ब्रह्म प्राविशच्छरीरेऽधि प्रजापतिः॥ ३०॥
अथ. कां. ११ अनु. ४ सू. ११ मं. २९, ३०

प्राणापानाविति = ते प्राणापानचक्षुरादीनि सर्वाणि इन्द्रियाणि शरीरं प्रविश्य तेन सह ईयन्ते स्वस्वव्यापारेषु प्रवर्तन्ते॥ २९॥ याः आपः याश्च देवता इन्द्रियाभिमानिन्यः याविराड्संज्ञा देवता ब्रह्मणा ब्रह्मणो तेजसा सह वर्तमानाः ताः सर्वाः शरीरे प्राविशन्। तदनन्तरं यत् जगत्कारणं परंब्रह्म तदपि अन्तर्यामिरूपेण तच्छरीरं प्राविशत्। तस्मिन् शरीरे अधिप्रजापतिः प्रजानां पालयिता प्रजोत्पादकः जीवो वर्तते॥ ३०॥

उत्क्रामन्तमिति = विमूढाः विवेकशून्या मनुष्याः उत्क्रामन्तं = शरीरं त्यक्त्वा गच्छन्तं स्थितं वाऽपि अथवा शरीरे स्थितं भुञ्जानं वा अथवा भोगान् भुञ्जन्तं गुणान्वितं गुणैः सत्वादिगुणविकारैः सुखदुःखादिभिः समन्वितं न अनुपश्यन्ति न निरीक्षन्ते। ज्ञानचक्षुषः ज्ञानं विवेक एव चक्षुर्येषां ते ज्ञानचक्षुषः शुद्धात्मानः यतयः पश्यन्ति अवलोकयन्ति ॥ १० ॥

(मूलम्) उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम्।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥

(वेदम्) ऊर्ध्वं भरन्तमुदकं कुम्भेनेवोदहार्यम्। पश्यन्ति सर्वे चक्षुषा, न सर्वे मनसा विदुः ॥ अथ. कां. १० अनु. ४ सू. ८ मं. १४ (यद्वा)
अपाङ् प्राङेति स्वधया गृभीतो ऋ. १।१६४।३८
मर्त्यो मर्त्येना सयोनिः। ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न नि चिक्युरन्यम् ॥

उत्क्रामन्तमिति = सर्वे शुद्धात्मानः यतयः ऊर्ध्वं प्राणापानादीन् ऊर्ध्वं ~~शरीरात् बहिः~~ ब्रह्मरंध्रोर्ध्वमार्गे भरन्तम् हरन्तं जीवात्मानं कुम्भेन कलशेन उदहार्यम् हर्तुयोग्यम् उदकं जलमिव चक्षुषा ज्ञाननेत्रेण पश्यन्ति। सर्वे साधारणाः पुरुषाः मनसा स्थूलमनसा न पश्यन्ति ॥ यथा च मंत्रान्तरम् " पश्यदक्षण्वान्न वि चेतदन्धः ऋ. १।१६४।१६" ॥
अपाङिति अमर्त्यः जीवात्मा मर्त्येन देहेन सह सयोनिः समानजन्मा, समानस्थानः सन् स्वधया स्वस्मिन् धारितया सात्त्विकराजसतामसगुणजन्यकर्मफलधारणेन यद्वा अन्नमयकोशेन गृभीतः गृहीतः अपाङ् नीचयोनिं प्राङ् उच्चयोन्यादियोनिम् एति प्राप्नोति ता तौ देहात्मानौ शश्वन्ता संततनित्यसंबंधौ, विषूचीना देहजीवात्मानौ स्वकर्मफलोपभोगाय लोकलोकान्तरगमनशीलौ वियन्ता सहगमनौ अन्ये योगिनः अन्यं देहात् भिन्नं जीवात्मानं नि चिक्युः जानन्ति। अन्ये मूढा न नि चिक्युः देहात् भिन्नं जीवात्मानं न जानन्ति ॥ ३८ ॥ ५००

× अभि वेना अनूषतेयक्षन्ति प्रचेतसः । मज्जन्त्यविचेतसः ॥ ऋ० मं० ९ सू० ६४ मं० २१



यतन्त इति=योगिनः यतयः यतन्तः शमदमादिसाधनैः आत्मानं द्रष्टुं यतन्तः यत्नं कुर्वन्तः एनं जीवात्मानम् आत्मनि अवस्थितं स्वश रीरेऽवस्थितं बुद्ध्यादिप्रकाशकं पश्यन्ति । अकृतात्मानः मलिनान्तःकरणाः अचेतसः विवेकरहिताः अत एव बहिर्मुखाः पुरुषाः यत न्तः अपि बहुधा यत्नं कुर्वन्तोऽपि एनं जीवात्मानं न पश्यन्ति ॥ ११ ॥

पूर्वबुद्ध्या स्वान्तःकरणे

(मू० गी०) यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥

(वेद० गी०) अपक्रामन् पौरुषेयाद् वृणानो दैव्यं वचः ।
प्रणीतीरभ्यावर्तस्व विश्वेभिः सखिभिः सह ॥ अथ० कां० ५ सू० ३० मं० १ १.५

(यजु०) आरोहतायुर्जरसं वृणाना अनुपूर्वं यतमाना यति स्थ ।
तान् वस्त्वष्टा सुजनिमा सजोषाः सर्वमायुर्नयतु जीवनाय ॥ अथ० कां० १२ अनु० २ सू० २ मं० २४

अपक्रामन्निति=हे योगिन्! हे जीवात्मन्! त्वं पौरुषेयात् पुरुषेभ्यो हितं तत्र वर्तमानं कामवाद काममद्यलोभादिकं लौकिके कर्म तस्मात् लौकिकात् कर्मणः अपक्रामन् अपगच्छन् दूरीभवन् दैव्यं देवसम्बन्धि परमात्मसम्बन्धि वचः वाक्यं वेदलक्षणं वचनं वृणानः संभजमानः स्वीकुर्वन् स्वाऽध्याय संभजनाद्धेतोः विश्वेभिः सर्वैः सखिभिः समानख्यानैः मित्रभूतैः यतिभिः सह प्रणीतीः प्रकर्षेण जीवनं प्राप्रीः अभ्यावर्तस्व अभिगच्छ । पौरुषेयात्=सर्वपुरुषाभ्यां ढञ्यौ, इति ढञ् प्रत्ययः । ढस्य एयादेशः । दैव्यम्=देवाद् यञ्ञौ, इति यञ् प्रत्ययः । वृणानः=वृङ् संभक्तौ क्र्यादि० "हेतौ शानच् प्रत्ययः ॥ १ ॥ (यजु०)

आरोहतेति=हे मनुष्याः जरसं वृद्धाऽवस्थां वृणानाः अ~~पराजयन्तो दूरीकुर्वन्तो~~ वा यूयम् आयुः दीर्घजीवनम् आरोहत प्राप्नुत तथा अनुपूर्वम् आनुपूर्व्या रीत्या यतमानाः यत्नं कुर्वन्तः यति ब्रह्मचर्यजीवने स्थ । त्वष्टा परमात्मा सजोषाः प्रेमसहिताः वा सुजनिमा सुजातान् तान् साधनसम्पन्नान् वः युष्मान् जीवनाय प्राणरक्षणाय सर्वं समग्रम् आयुः जीवनं नयतु चालयतु ॥ २४ ॥

यक्षु—वेनाः भगवतः स्तोतारः योगिनः अभ्यनूषत परमेश्वरं स्तुवन्ति । अत एव आत्मदर्शने कृतप्रयत्नाः प्रचेतसः सुमतयः ज्ञानिनः इयक्षन्ति मध्ये मिलन्ति । अप्रचेतसः दुर्बुद्धयः मूर्खाः भगवद्दर्शनाय यतमानाः अपि मज्जन्ति जन्ममरणरूपे मज्जन्ति नरयन्ति ॥

यदादित्येति = आदित्यगतं सूर्यस्य अन्तर्गतं वर्तमानं यत् तेजः अखिलं सर्वं जगत् प्रपञ्चं भासयते प्रकाशयति। यत् तेजः अग्नौ वह्नौ विद्यमानं सत् सर्वं जगत् भासयते। यत् तेजः अग्नौ वह्नौ वर्तमानं सत् जगत् भासयते। तत् तेजः मामकं मत्सम्बन्धि विद्धि जानीहि ॥१२॥

(भ॰ गी॰) यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥१२॥

(वेदगी॰) यो अग्नौ रुद्रो यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश।
य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमोऽस्त्वग्नये ॥१॥
अथ॰ कां॰ ७ अनु॰ ८ सू॰ ९२ मं॰ १

य इति = रुद्रः रुत् दुःखं तस्य द्रावयिता, प्रकाशः यद्वा रुत् द्युतिः तथा गन्तव्यः रुद्रः परमात्मा। यद्वा रोदयति पापान् इति रुद्रः परमात्मा अग्नौ अन्तर्मध्ये आविवेश अग्नौ स्वतेजः अधारयत्। यश्च परमात्मा अप्सु जलात्मके चन्द्रमसि अन्तर्मध्ये आविवेश प्रविष्टः। यश्च परमात्मप्रकाशः विरुधः विशेषेण विविधं वा रोहन्ति ओषधिः। ओषः फलपाकः धीयते निधीयते आसु इति ताः फलपाकान्ताः लताः आविवेश चन्द्रात्मनाऽऽविष्टः। यः परमात्मा इमा इमानि नामरूपात्मना परिदृश्यमानानि विश्वा विश्वानि सर्वाणि भुवनानि भूतानि स्रष्टुम् इतिशेषः चाक्लृपे समर्थो भवति। तस्मै सर्वजगत्स्रष्ट्रे सर्वं जगत् अनुप्रविष्टाय ~~तस्मै रुद्राय नमः~~ अग्नये प्रकाशमयाय परमात्मने नमः = नमस्कारोऽस्तु। रुद्रः = रोदेर्णिलुक् च (उणा॰ २।२२) इति रक् प्रत्ययः "लेर्लुक्"। वीरुधः = विपूर्वात् रोहतेः क्विपि "नहिवृति— इत्यादिना उपसर्गस्य दीर्घः। हकारस्य धकारो पञ्चमस्वरान्दसः। चाक्लृपे = कृपू सामर्थ्ये। लिटि "कृपो रो लः" इति लत्वम्। अभ्यासस्य छान्दसः सांहितिको दीर्घः ॥१॥

पद्य

(वेदगी.) स एव सं भुवनान्याभरत् स एव सं भुवनानि पर्यैत ।
पिता सन्नभवत् पुत्र एषां तस्माद्वै नान्यत् परमस्ति तेजः ॥ ४ ॥
अथ. कां. १९ अनु. ६ सू. ५३ मं. ४

स इति = सः एव परमात्मा भुवनानि भूतजातानि सम् आ अभरत आहरत् आहरत् (सम्यक् तथा पालयति) आहरति उत्पादयति स्वेनोत्पादितानि भुवनानि सपर्यैत् सम्यक् तथा परिगच्छति व्याप्नोति। स एव पिता एषां भुवनानां जनकः सन् एषां पुत्रो भवत् भवति। तस्मात् सर्वोत्पादकात् सर्वगतात् तस्मात् परमात्मनः अन्यत् परम् उत्कृष्टं तेजो नास्ति। वै शब्दः प्रसिद्धौ। तेजो नास्तीति निषेधात् स्वस्यापि तेजोरूपत्वम् अर्थसिद्धम् तस्य भासा सर्वमिदं विभाति ॥ ४

गामिति = अहं परमात्मा एव ओजसा निजशक्त्या गां भूमिम् आविश्य सर्वतः प्रवेशं कृत्वा भूतानि स्थावरजंगमान् सर्वान् पदार्थान् धारयामि। रसात्मकः अमृतरसमयः सोमः चन्द्रो भूत्वा चंद्रस्वरूपमास्थितः सर्वाः ओषधीः व्रीहियवादीन् पुष्णामि पुष्टिमतीः करोमि ॥ १३ ॥

(भ. गी.) गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥

(वेदगी.) अयं स यो वरिमाणं पृथिव्या वर्ष्माणं दिवो अकृणोदयं सः । (मं. ६ अनु. ४ सू. ४७ मं. ४)
अयं पीयूषं तिसृषु प्रवत्सु सोमो दाधारोर्वन्तरिक्षम् ॥ ऋ. अष्ट. ४ अध्या. ८ व. ३ मं. ६

अयमिति = यः परमात्मा पृथिव्याः भूम्याः वरिमाणम् उरुत्वं विस्तृतत्वम् अकृणोत् अकरोत्। अयं परमात्मा (सः) दिवो द्युलोकस्य वर्ष्माणम् संहतत्वं दृढत्वं अकृणोत् अकरोत्। अयं परमात्मा सोमो भूत्वा तिसृषु ओषधीषु अप्सु गोषु प्रवत्सु प्रकृष्टासु एतासु पीयूषं रसं दधार धारयति। तथा उरु विस्तीर्णम् अन्तरिक्षं च धारयति। तथा च मन्त्रान्तरम् " त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः। त्वमाततन्थोर्वन्तरिक्षम् ४ ऋ. मं. १ सू. ९१ मं. २२ ॥

हे सोम! हे परमात्मन् त्वं चंद्रो भूत्वा इमा ओषधी वनस्पतीः अजनयः त्वं ज्योतिषा वि तमो ववर्थ
तथा त्वं विश्वाः सर्वाः अपः जलानि अजनयः त्वं गाः सूर्यचंद्ररश्मीन् अजनयः। त्वं उरु विस्तृतं अंतरिक्ष ५०३
तनोषि। त्वं ज्योतिषा स्वप्रकाशेन तमः अंधकारं अज्ञानं च विववर्थ वि+अनाशयः - है

सर्वस्येति= सर्वस्य ब्रह्मादिस्तम्बपर्यन्तस्य जीवमात्रस्य हृदि हृदयदेशेऽहं परमात्मा संनिविष्टः सम्यक्तया प्रविष्टः तिष्ठामि। मत्तः परमेश्वरात् एव स्मृतिः स्मरणसंस्कारः तथा ज्ञानम् अयमेवाहमस्मि इयमेव प्रकृतिः इदं ब्रह्मेति ज्ञानं मत्त एव भवति। तथा अपोहनं स्मृतिज्ञानयोः ~~तिरोभावः~~ मत्त एव भवति। सर्वैः वेदैः ऋग्यजुःप्रभृतिभिर्वेदैरहं परमात्मैव वेद्यः ज्ञातुं योग्योऽस्मि। तथा वेदान्तकृत् तथा वेदवित् अहमेवाऽस्मि ॥१५॥ संशयविपर्ययच्छिद्दूषितज्ञानदूरीकरणात्

(मू. गी.) सर्वस्य चाऽहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥१५॥

(वेदगी.) गर्भे॒ नु सन्नन्वे॑षामवेदम॒हं दे॒वानां॒ जनि॑मानि॒ विश्वा॑।
श॒तं मा॒ पुर॒ आय॑सीररक्ष॒न्नध॑ श्ये॒नो ज॒वसा॒ निर॑दीयम् ॥१॥
ऋ. अ. ३ अध्या. ६ व. १६ मं. १ (मं. ४ अनु. ३ सू. २७ मं. १) ऐतरे. आ. ४।२७

गर्भे इति= अहं परमात्मा एषां देवानां स्वकर्मणा दीप्यमानानां जीवानां विश्वा विश्वानि सर्वाणि जनिमानि जन्मानि अन्ववेदम् आनुपूर्व्येण अशासिषम् जानामि च। एषां जीवानां गर्भे नु मध्ये हृदि एव सन् वर्तमानः विद्यमानः सर्वं जानामि। तथा शतं बहूनि आयसीः लोहवद् दृढानि पुरः शरीराणि मां हृत्संनिविष्टं अरक्षन् अधारयन्। अध अधुना श्येनः श्येनवत् निर्भयः स्थितोऽहं जवसा वेगेन निरदीयं शरीरात् निरगमम्। अनावरणमात्मानं जानन् निर्गतोऽस्मि इत्यर्थः। १॥

द्वाविति = लोके संसारे क्षरः क्षरति नश्यतीति क्षरः महदादि स्थूलान्तः संसारलक्षणः एकः पुरुषः । अक्षरः न क्षरतीति अक्षरः नित्यः अविनाशी आत्मा इतीमौ द्वौ पुरुषौ स्तः । तत्र भवन्तीति भूतानि आकाशादीनि भूम्यन्तानि देहेन्द्रियादीनि भूतकार्याणि सर्वाणि क्षर इत्युच्यते कूटस्थः कूटे दृढत्वे तिष्ठतीति कूटस्थः अविनाशी अक्षरः जीवं इत्युच्यते ॥ १६ ॥

(मू. गी.) द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥१६॥

(वेद.) द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ १७ ॥
ऋ. अष्ट. २ अध्या. ३ व. २. मं. १७ मंड. १ सू. १६४ मं. २० ) अथ. कां. ९ सू. ९ मं. २०.
निरु. १४।१३.

द्वा इति = द्वा द्वौ द्विसंख्याकौ सुपर्णा सुपर्णौ सुपतनौ शोभनगमनौ सयुजा सयुजौ समानयोगौ ~~समानं वृक्षम्~~ सखाया सखायौ समानख्यानौ पुरुष इति समाननामानौ समानं वृक्षम् एकमेव वृक्षम् शरीरं परिषस्वजाते आश्रयतः । तयोः द्वयोः मध्ये अन्यः एकः जीवात्मा पिप्पलं पक्वं कर्मफलं स्वादु स्वादुतरम् अत्ति भक्षयति । अपरः पुरुषः अनश्नन् भोगादि रहितः अभिचाकशीति दीव्यति ॥ १७ ॥ तथा चोपनिषदि "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः",

उत्तम इति अाभ्यां पुरुषाभ्यां भिन्नः उत्तमः सर्वोत्कृष्टतमः अस्ति, यः परमात्मा इति उदाहृतः योगिभिः पुरुषैः कथितः। यः अव्ययः विकाररहितः क्षयरहितो वा ईश्वरः सर्वस्वामी लोकत्रयं लोक्यन्ते ज्ञायन्ते इति लोकाः स्थूलसूक्ष्मकारणदेहाः तेषां त्रयं लोकत्रयं स्थूलसूक्ष्मकारणाख्यं शरीरत्रयम् स्वाधारम् आविश्य बहिरन्तश्च सर्वतो व्याप्य बिभर्ति धारयति। १८॥

मू॰गी॰ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

वेद॰गी॰ २ इमं च लोकं परमं च लोकं पुण्यांश्च लोकान् विधृतीश्च पुण्याः।
सर्वांल्लोकानभिजित्य ब्रह्मणा कालः स ईयते परमो नु देवः ॥ २
अथ॰ कां॰ १९ अनु॰ ६ सू॰ ५४ मं॰ ५ (पद्य) त्रयः केशिन ऋतुथा
१ विचक्षते संवत्सरे वपत एक एषाम्। विश्वमन्यो अभिचष्टे शचीभि-
र्ध्राजिरेकस्य ददृशे न रूपम्॥ अथ॰ कां॰ ९ अनु॰ १० सू॰ १ मं॰ २६ ऋ॰ मं॰ १ सू॰ १६४ मं॰ ४४ निरु॰ १२।२७

~~इमभिति~~

त्रय इति = त्रयः त्रिसंख्याकाः प्रकृतिजीवपरमात्मानः इति त्रिसंख्याकाः केशिनः स्वस्वप्रकाशेन प्रकाशिताः पदार्थाः सन्ति। ये ऋतुथा यथाधिकारं सम्यक् विचक्षते प्रकाशन्ते। एषां त्रयाणां मध्ये एकः संवत्सरे क्षेत्रे वपते बीजं वपति। अन्यः द्वितीयः विश्वं जगत् स्थूलसूक्ष्मकारणं जगत् शचीभिः स्वशक्तिभिः अभिचष्टे प्रकाशयति। एकस्य सर्वोत्तमस्य पुरुषस्य ध्राजिः वेगः धारणशक्तिर्वा ददृशे दृष्टिपथे समायाति तद्रूपं सामान्यदृष्टिपथे न समायाति ॥ १ ॥ इमभिति = इमं सर्वकर्मार्जनस्थानं लोकं लोक्यन्ते ज्ञायन्ते इति लोकः स्थूलसूक्ष्मकारणदेहाः ते लोकं देहं परमं फलभोगस्थानं स्वर्गलोकं पुण्यान् पुण्यकर्मभिः अर्जितान् लोकान् पुण्याः दुःखलेशेनासंस्पृष्टा विधृतीः लोकधारकान् सर्वान् उक्तान् अनुक्तांश्च लोकान् ब्रह्मणा सर्वतो बृहत्तमेन व्यापकत्वेन परमात्मना अभिजित्य अभिव्याप्य सः परमः सर्वोत्तमः कालः जगत्कलिता परमात्मा देवः द्योतनशीलः स्वयंप्रकाशः ईयते स्थावरजंगमात्मकं जगत् व्याप्य वर्तते ॥ २ ॥

यस्मादिति = यस्मात् कारणात् क्षरं विनश्वरं जगत् अतीतः परंगतोऽस्मि। अक्षरात् जीवादपि उत्तमः उत्कृष्टतरः अस्मि। अतोऽस्मात् कारणात् लोके संसारे वेदे ऋग्वेदादौ च पुरुषोत्तमः पुरुषोत्कृष्टतमः इति प्रथितः प्रसिद्धोऽस्मि ॥ १८ ॥

(मू-गी-) यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥१८॥

(वेद-गी-) यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा।
प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि सचते स षोडशी ॥ यजु: ८।३६

यद्वा "तस्माद्वै विद्वान् पुरुषमिदं ब्रह्मेति मन्यते। सर्वा ह्यस्मिन् देवता
गावो गोष्ठ इवासते ॥ अथ. कां. ११ अनु. ४ सू. १० मं. ३२ यद्वा

"तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः" ऋ. मं. १० सू. १२० मं. १ अथ. कां. ५ सू. २ मं. १ कां. २० सू. १०७ मं. ४ ऐ. आर. १।१२ निरु. १४।२४

यस्मादिति = यस्मात् परमात्मनः पुरुषोत्तमात् परः उत्तमः अन्यः अपरः जातः प्रादुर्भूतः देवो नास्ति न विद्यते। यः पुरुषोत्तमः विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आविवेश विशति। प्रजापतिः प्रजायाः पतिः प्रजाधीशः परमात्मा प्रजया संसारेण संरराणः संरममाणः क्रीडन् त्रीणि ज्योतींषि त्रिसंख्याकानि अग्निविद्युत्सूर्यलक्षणानि सचते सेवते। स च षोडशी १ प्राणः श्रद्धा खं वायुर्ज्योतिः आपः पृथिवी इन्द्रियं मनः अन्नं वीर्यं तपो मन्त्राः लोकाः नामानि च सचते सेवते ॥ ३६ यद्वा

तस्मादिति = तस्मात् पुरुषस्य पुरुषोत्तमत्वात् विद्वान् क्षराक्षराभ्यामुत्तमं पुरुषं जानन् इदं पुरुषं "पुरि देहे शेते इति पुरुषः सर्वप्राणिदेहेऽवस्थितः पूर्णः तं पुरुषं पुरुषोत्तमम् इदम् अपरोक्षम् अन्तर्बहिर्व्याप्य अवस्थितं ब्रह्म, इति मन्यते जानाति। हि यस्मात् कारणात् सर्वाः देवताः प्राणोऽपानादि वायवः सर्वेन्द्रियाणि तदधिष्ठातारोऽग्न्यादयश्च अस्मिन् पुरुषोत्तमे आसते निवसन्ति। गावो गोष्ठ इव = यथा गावः स्वकीये गोष्ठे स्थाने विश्रम्भेण निवसन्ति ॥ ३२ ॥

स इति = असंमूढः विमोहः शुद्धात्मा यो मुमुक्षुः क्षराक्षरविलक्षणं पुरुषोत्तमम् मां जानाति। हे भारत! हे अर्जुन! सः सर्ववित् सर्वसंसारतत्त्वज्ञः सन् मां परमात्मानं सर्वभावेन सार्वात्म्येन भजति प्राप्नोति ॥१९॥

(मू. गी.) यो मामेवमसंमूढो जानाति पुरुषोत्तमम्।
स सर्वविद्भजति मां सर्वभावेन भारत ॥१९॥

वेद गी.) ये चं देवाँ अयंजन्ताथो ये चं परादुदिः।
सूर्यो दिवंमिव गत्वायं मुघवांनो वि रंप्शते ॥५॥
अथ. कां. २ अनु. ९ सू. १२८ मं. ५

ये इति = ये असंमूढाः पुरुषाः देवाँ देवान् दिव्यगुणयुक्तान् इन्द्रादीन् अमरान् विदुषः वा ~~पूजयन्ति~~ अयजन्त पूजयन्ति अनन्यभावेन अथो = ये च पुरुषाः तेभ्यः परादुदिः दानं कुर्वन्ति। ते नराः सूर्य इव दिवं स्वर्गं गत्वाय प्राप्य मघवानः पूज्याः सन्तः विरप्सन्ते विविधां शोभाम् प्राप्नुवन्ति। ५॥
पर्येश मां पुरुषोत्तमः अनन्यभक्तिभावनया

इतीति=हे अनघ! हे निष्पाप! हे अर्जुन! इति एवंप्रकारेण मया इदमेतत् गुह्यतमम् हृदये गोप्यतमम् शास्त्रम् उक्तं कथितम्। हे भारत! यः एतच्छास्त्रं बुद्ध्वा ज्ञात्वा बुद्धिमान् ज्ञानवान् स्यात् भवति। कृतकृत्यः च सर्वकर्मानुष्ठाता स्यात् ॥२०॥

**इति श्री जगन्नाथशास्त्रि संकलितायां गीतावेदार्थबोधिन्यां पञ्चदशोऽध्यायः ॥१५॥**

**(मू. गी.) इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ।**
**एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥२०॥**
**इति श्रीमद्भगव. ब्रह्मवि. पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः**

**(वेद मं.) गूहता गुह्यं तमो वियात विश्वमत्रिणम्। ज्योतिष्कर्ता यदुश्मसि ॥१॥**
**ऋ. अष्ट. १ अध्या. ६ व. ११ मं. १। मं. १ सू. ८६ मं. १०।**

गूहतेति=हे मुमुक्षवः जीवात्मानः! गुह्यं शरीरान्तर्गतगुहारूपे हृदये वर्तमानं तमः अज्ञानं गूहत विनाशयत। तथा एतच्छास्त्रेण विश्वं सर्वम् अत्रिणम् पुरुषार्थस्य अपवर्गस्य अत्तारं कामक्रोधादिकं वियात विनिर्गमत। यत् तत् ज्योतिः परमात्मसाक्षात्काररूपं ज्ञानम् उश्मसि कामयामहे। हे मुमुक्षवः! तत् कर्तं कुरुत। गूहता=गुहू संवरणे शपि लघूपधगुण ऊदुपधाया गोहः „(पा. ६।४।८९) इत्युपधाया ऊकारः। यात=या प्रापणे अस्मादन्तर्भावितण्यर्थाल्लोट्। अत्रिणम् "अदेस्त्रिनिश्च„ इति त्रिनिप्रत्ययः इकारः नकारपरित्राणार्थः उश्मसि=वश कान्तौ "इदंतो मसि„ अदादित्वाच्छपो लुके "ग्रहिज्यावयि—„ इति संप्रसारणम् १०

**इति श्री सनातनवैदिकपरिव्राजकाचार्य मानव न्यायभूषण जगन्नाथशास्त्रि संकलितायां गीतावेदार्थबोधिन्यां पञ्चदशोऽध्यायः समाप्तः ॥१५॥**

X यत् यदि त्वं ज्योतिः परमात्मज्योतिः उश्मसि इच्छसि, तदा कर्त=वैदिकज्ञानप्राप्तिं कुरु गुह्यं सुरक्षितं वैदिकज्ञानं गूहत हृदये सुरक्षितं स्थापय। एतेन वैदिकशास्त्रज्ञानेन विश्वं संसारं अत्रिणं भक्षकं कामक्रोधलोभादिकं तमः अज्ञानान्धकारं वियात दूरीकुरु ५१०

(अथ षोडशाऽध्यायारंभः)

"यस्य निःश्वसितं वेदः यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनः प्राप्तः कुरुक्षेत्रे प्रदर्शनम्॥१॥
वेदो गीता तथा वेद गीता वेद एव न संशयः। वेदगीता पृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनात्"॥२॥

अभयमिति = अभयं भयाऽभावः १ सत्त्वसंशुद्धिः मनसः शुद्धता २ ज्ञानयोगव्यवस्थितिः, ज्ञानव्यवस्थितिः सत्याऽसत्यविचारव्यवस्थितिः ३ योगव्यवस्थितिः वैदिककर्माऽनुष्ठानव्यवस्थितिः ४ दानम् अर्थिभ्यः यथाशक्ति अन्नादि समर्पणम् ५ दमः इन्द्रियाऽवरोधनम् ६ यज्ञश्च श्रौताग्न्याधानम् ७ चकारात् स्मार्तः स्थालीपाकादिः ८ स्वाध्यायः ब्रह्मयज्ञाद्यनुष्ठानम् ९ तपः ब्रह्मचर्यादिव्रतैः शरीरेन्द्रियादीनां वशीकरणम् १० आर्जवम् मनोवाक्कायकर्मणां सदैकरूपता ११ अहिंसा कस्याऽपि प्राणिनः शरीरवाङ्मनोभिः अपीडनम् १२ सत्यं यथार्थभाषणम् १३ अक्रोधः कोपाऽभावः १४ त्यागः कृतश्रौतस्मार्तकर्मफलत्यागः १५ यद्वा उदारता १५ शान्तिः अन्तःकरणस्य सर्वथोपरतिः १६ अपैशुनं परोक्षे परमर्माऽप्रकाशनम् १७ भूतेषु दया दीनेषु आर्तेषु च करुणा १८ अलोलुप्त्वम् विषयसन्निकर्षेऽपि इन्द्रियविकाररहित्यम् १९ मार्दवं क्रूरत्वभाऽभावः २० ह्रीः दुष्कर्मकरणे लज्जा २१ अचापलम् इन्द्रियमनसां निर्निमित्तव्यापाररहित्यम् २२ तेजः गुणगौरवं ओजस्वत्वम् २३ क्षमा परकृतोपद्रवसहिष्णुत्वम् २४ धृतिः विक्षिप्ते सत्यपि धैर्यम् २५ शौचं शरीरमनोवाग्भिः पावित्र्यम् २६ अद्रोहः स्वाऽपकारकारिहननेच्छारहित्यम् २७ नाऽतिमानिता मानाऽभावः २८ दैवी सम्पदं दीव्यते निर्मलत्वेन प्रकाशते इति देवः सत्त्वगुणः तस्य सम्बन्धिनी दैवी सम्पत् समृद्धिः उत्कर्षः तां दैवीं सम्पदम् अभिजातस्य पूर्वजन्मकृतपुण्याऽधिक्येन सत्त्वाधिक्यमनुलक्ष्य जातस्य पुरुषस्य एते अष्टाविंशति सात्त्विका धर्मा भवन्ति संभवन्ति॥१, २, ३॥

(मूलगी.) अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः। दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥१॥ अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्। दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥२॥ तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता। भवन्ति संपदं

दैवीमभिजातस्य भारत ॥ ३ ॥

(वेदगी०) अष्टाविंशानि शिवानि शग्मानि सह योगं भजन्तु मे।
योगं प्रपद्ये क्षेमं च, क्षेमं प्रपद्ये योगं च नमोऽहोरात्राभ्यामस्तु ॥ २ ॥
अथ० कां० १९ अनु० १ सू० ८ मं० २

अष्टाविंशानीति = हे परमात्मन्! अभयम् १ सत्वसंशुद्धिः २ ज्ञानम् ३ योगः ४ दानम् ५ दमः ६ द्विविधः यज्ञः (श्रौतः ७ स्मार्तश्च ८) स्वाऽध्यायः ९ तपः १० आर्जवम् ११ अहिंसा १२ सत्यम् १३ अक्रोधः १४ त्यागः १५ शान्तिः १६ अपैशुनम् १७ भूतेषु दया १८ अलोलुप्त्वम् १९ मार्दवम् २० ह्रीः २१ अचापलम् २२ तेजः २३ क्षमा २४ धृतिः २५ शौचम् २६ अद्रोहः २७ नातिमानिता २८ इत्येवं-विधानि अष्टाविंशानि प्रत्येकम् अष्टाविंशतेः संख्यायाः पूरणानीति सर्वाणि अष्टाविंशानि शिवानि सुखदर्शनानि सात्त्विकानि शग्मानि सुखनामैतत् सुखप्रदानि मे मम सात्त्विकस्य पुरुषस्य सात्त्विकं फलं दातुं सहयोगं सहभावं भजन्तु प्राप्नुवन्तु अहं सात्त्विकः पुरुषः दैवीसम्पत्तिमान् एषां प्रभावात् योगम् "अलभ्यवस्तुप्राप्तिः योगः" तं योगं प्रपद्ये पूर्वम् अलभ्यम् अपवर्गं दैवीसंपत्प्रसादात् लभेय। अहं च क्षेमं "लब्धवस्तुपरिपालनं क्षेमः" तं क्षेमं प्रपद्ये प्राप्नुयाम्। योगक्षेमप्रधानताऽऽसिद्धये योगक्षेमयोः द्विरावृत्तिः। अहनि रात्रौ च दैवीसंपदः संचरणात् तयोरानुकूल्यकरणे नमोऽहोरात्राभ्याम् अस्तु इति ताभ्यां नमः नमस्कारोऽस्तु ॥ अष्टाविंशानि = पूरणार्थे डट् प्रत्यये कृते "ति विंशतेर्डिति" इति तिशब्दस्य लोपः। "बहुगणवतुडति संख्या" इत्यष्टशब्दस्य आत्वम्। अहोरात्राभ्याम् = अहश्च रात्रिश्च "अहःसर्वैकदेश —" इत्यचसमासान्तः ॥ २ ॥ **स्वामिदयानन्दसरस्वतीयं भाष्ये** ॥ हे परमेश्वर! हे भगवन्! कृपया अष्टाविंशानि (शिवानि) कल्याणानि कल्याणकारकाणि सन्तु अर्थात् दशेन्द्रियाणि दश प्राणाः मनो बुद्धिश्चित्ताऽहंकारं विद्यास्वभावशरीरबलं चेति (शग्मानि) सुखकारकाणि भूत्वा (अहोरात्राभ्याम्) दिवसे रात्रौ चोपासनाव्यवहारं योगं (मे) मम (भजन्तु) सेवन्ताम्। तथा भवत्कृपयाऽहं (योगं) प्रपद्ये प्राप्य क्षेमं च प्रपद्ये क्षेमं प्राप्य योगं च प्रपद्ये। यतोऽस्माकं सहकारी भवान् भवेदेतदर्थं सततं नमोऽस्तु ॥ २ ॥

एकादशे लोभः ४



हे पार्थ! हे अर्जुन!

दम्भ इति=दम्भः स्वस्वमहत्त्वसिद्धये स्वदोषान् आच्छाद्य स्वमहत्त्वप्रकटनम् १ दर्पः सज्जनाऽवमानहेतुः विद्यादिभिः श्रेष्ठो जो दुष्टो वा २ अभिमानः स्वस्मिन् श्रेष्ठत्वबुद्धिः ३ क्रोधः चित्तक्षोभः ४ पारुष्यं निष्ठुरभाषणम् ५ अज्ञानं विपरीतबुद्धिः ६ इति सप्त संख्याकाः दोषाः असुरीं संपदं घोरं कर्म कारयितुं पुरुषस्य असून् प्राणेन्द्रियाणि राति आकर्षतीत्यसुरः रजोगुणस्तमोगुणश्च तस्य सम्बन्धिनी आसुरी संपत् समृद्धिः उत्कर्षः ताम् आसुरीं सम्पदम् अभिजातस्य दुरात्मनः भाव्यनर्थपात्रस्य पुरुषस्य षडेते रजस्तमोधर्माः भवन्ति संभवन्ति ॥ ४ ॥

(मू.गी.) दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च।
अज्ञानं चाभिजातस्य पार्थ! सम्पदमासुरीम् ॥४॥

(वेद गी.) सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात्।
आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ ॥६
ऋ.अष्ट.७ अध्या.५ व.३३ मं.६ (मंड.१०.सू.५ मं.६) अथ.कां.५ सू.१ मं.६ निरु.६।२७

सप्तेति=कवयः मेधाविनः ऋषयः सप्त मर्यादाः "दम्भः १ दर्पः २ अभिमानः ३ क्रोधः ४ पारुष्यम् ५ अज्ञानं ६ लोभः ७" यद्वा पानम् १ दुर्व्यसनम् २ स्त्रियः ३ मृगया ४ दण्डः ५ पारुष्यम् ६ अन्यदूषणम् ७ इति सप्त मर्यादाः। यद्वा "स्तेयम् १ गुरुतल्पारोहणं २ ब्रह्महत्या ३ भ्रूणहत्या ४ सुरापानम् ५ दुष्कृतकर्मणः पुनः पुनः सेवनम् ६ पातकेऽनृतोद्यम्" इति निरुक्ते निर्दिष्टाः सप्त मर्यादाः अवस्थिताः ततक्षुः तक्षतिः करोतिकर्मा। सुकु लंघनीयाश्च कुः त्यक्तवन्तः इत्यर्थः। तासां सप्तासुरीमर्यादानाम् मध्ये एकाम् एव अंहुरः पापवान् आसुरीपुरुषः अभिगात् अभिगच्छति। यस्तु एवं करोति सः पापवान् भवतीत्यर्थः। किञ्च आयोः अस्य आसुरीपुरुषस्य स्कंभः स्कंभयिता निरोधकः परमेश्वरः उपमस्य समीपभूतस्य दैवीपुरुषस्य नीडे उत्संगे पथां सुमार्गाणां विसर्गे विसर्जनस्थाने दिवि धरुणेषु धर्मधारकेषु नक्षत्रेषु तस्थौ वर्तते। इति ६ ॥

दैवीति = हे पाण्डव! हे पाण्डुपुत्रार्जुन! दैवी संपत् दैवी समृद्धिः विमोक्षाय विमुक्तये मता कथिता। आसुरी संपत् निबन्धाय पुनः पुनर्जन्मग्रहणाय मता कथिता प्रोक्ता। हे अर्जुन! त्वं दैवीं संपदं गृहीत्वाऽभिजातोऽसि उत्पन्नोऽसि। अतः मा शुचः अस्मिन् विषये शोकं मा कुरु ५

(मू॰गी॰) दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता।
मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव! ॥५॥

(वेदगी॰) इहेदसाथ न परो गमाथेर्यो गोपाः पुष्टपतिर्व आजत्।
अथ॰ कां॰ ३ सू॰ ८ मं॰ ४ ।

अर्थ = हे जीवात्मन्! इह दैवीसम्पत्तौ इत एव असाथ सर्वदा वासं कुरुत परः दूरे न गमाथ मा गच्छत इर्यः स्वकृत्येन युक्तः सन्तः गोपाः गोपालः इन्द्रियरक्षकः पुष्टपतिः पोषणकर्ता स्वोपदेशेन वः युष्मान् दैवीसम्पत्तिमतः आजत् अत्रैवानयत् ॥

द्वाविति = अस्मिन् लोकेऽस्मिन् संसारे भूतसर्गौ भवन्तीति भूतानि सृज्यते सेसृज्यते गन्धः पुष्पमिव प्राणिचित्तमनुबध्य तिष्ठतीति सर्गः स्वभावः भूतसर्गः भूतस्वभावौ (प्रकृती) दैवः आसुर इति च द्वौ एव स्तः। हे पार्थ! हे अर्जुन! दैवः देवसम्बन्धिभूतसर्गः विस्तरशः विस्तरेण प्रोक्तः कथितः सम्प्रति मे मया वक्ष्यमाणम् आसुरम् असुरसम्बन्धि सर्गम् शृणु आकर्णय ॥ ६ ॥

(मूलगी·) द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।
दैवो विस्तरशः प्रोक्तः आसुरं पार्थ मे शृणु ॥ ६ ॥

(वेदगी·) द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुपधापयेते।
हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥ १ ॥
यजुः ३३। ५ ऋ० अष्ट· १ अध्या· ८ व· १ मं· १ (मं· १ ~~अनु·~~ सू· ९५ मं· १)
तै· ब्रा· २।७।१२।२।२

द्वे इतिः द्वे द्विसंख्याके दैवी आसुरी च सृष्टी विरूपे विरुद्धस्वभावे विषमरूपे स्वर्थे स्वरणे शोभनगमनागमने यद्वा अर्थः प्रयोजनम् स्वस्वप्रयोजने चरतः संसारे आवर्तेते। अन्यान्या पृथक् पृथक् स्वरूपा, एका, एका वत्सं स्वं स्वं पुत्रं दैवं पुत्रं दैवी सृष्टिः आसुरं पुत्रम् आसुरी सृष्टिः उपधापयेते स्वकीयं स्वकीयं रसस्वरूपं कर्मफलं पाययतः। अन्यस्याम् एकस्याम् आसुरीसृष्ट्यां हरिः सर्वशुभकर्महरणशीलः आसुरः जीवः भवति उत्पद्यते। अन्यस्याम् एकस्यां दैवीसृष्ट्यां स्वधावान् प्रशस्तश्रन्याद्यमृतमयगुणयुक्तः सुवर्चाः शोभनं वर्चः तेजो यस्य,, सः सुवर्चाः तेजस्वी शुक्रः निर्मलज्ञानवान् सत्त्वगुणविशिष्टः दैवः जीवः ददृशे दृष्टिपथे समायाति। स्वर्थे = स्तृ गतौ "उषिकुषिगार्तिभ्यस्थन्,, इति भावे कर्मणि वा थन् प्रत्ययः। अन्यान्या = कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः इति वक्तव्यम्। "समासवच्च बहुलम्,, इति द्विर्भावः। धापयेते = धेट् पाने "आदेच –,, इत्यात्वम् "हेतुमति च,, "अर्तिह्री – ,, इति पुगागमः। तत्र लक्षणप्रतिपदोक्तपरिभाषा नास्तीति ज्ञापितम्। "शाछासा –,, कृतात्वानां निर्देशेन। सा हि पुकं प्राप्तिव्याप्तं निर्देशेन... नार्थः। यदि तत्र लक्षणप्रतिपदोक्तपरिभाषया पुक् न प्राप्नोति सोऽनर्थकः स्यात्। तस्माद् धापयतौ त्यादाविव "धापयेते,, इत्यत्रापि पुगागमः सिद्धः। निगरणचलनार्थेभ्यश्च,, पा· १।३।८७ इति प्राप्तस्य परस्मैपदस्य पादिषु धेट् उपसंख्यानम्,, (पा· १।३।८९) इति प्रतिषेधत्वात्मने पदम्। हरिः = हृञ् हरणे,, औणादिक इन् प्रत्ययः। ददृशे = दृशिर् प्रेक्षणे,, लुङ् लङ्लिट इति वर्तमाने लिट् ॥ १ ॥

५१०

प्रवृत्तिमिति = आसुराः असून् प्राणान् लान्ति आददते अपहरन्तीत्यसुराः "आतोऽनुपसर्गे कः" यद्वा अस्यन्ति क्षिपन्ति नरके शरीरं इत्यसुराः तामसाः। आसुरस्वभावाः जनाः जीवा प्रवृत्तिं शास्त्रानुकूले कर्तव्ये धर्मेति प्रवृत्तिम्। निवृत्तिं शास्त्रनिषिद्धात् अधर्मादपसरणं न विदुः न जानन्ति। तेषु आसुरेषु जीवेषु शौचं बाह्याभ्यन्तरशुद्धिः आचारः सदाचारः दया सत्यं न विद्यते न वर्तते।

(भ·गी·) प्रवृत्तिञ्च निवृत्तिञ्च जना न विदुरासुराः।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥७॥

(मू·गी·) नीचैः खनन्त्यसुरा अरुस्राणमिदं महत्।
तदास्रावस्य भेषजं तदु रोगमनीनशत् ॥२॥
अथ·कां·२ अनु·१ सू·३ मं·३

पातयन्ति

नीचैरिति = असुराः असून् प्राणान् लान्ति आददते अपहरन्ति इति असुराः "आतोऽनुपसर्गे कः" इति कप्रत्ययः। अस्यन्ति क्षिपन्ति शरीरं नरके इति असुराः तामसाः तमोगुणस्वभावाः जनाः इदं परिदृश्यमानं महत् स्वमहत्त्वेन विस्तीर्णम् अरुस्राणम् अरुषां मालास्राणां परिपक्वं कर्मपाकस्थानम् नीचैः खनन्ति अवदारयन्ति यद्वा भूयोभूयः अधःस्थानं गच्छन्ति। तत् सर्वत्र व्यापकं ब्रह्मैव आस्रावस्य = आ समन्तात् स्रवणशीलस्यास्रावस्य पुनःपुनर्जन्ममयः रोगः, तस्य पुनर्जन्मरोगस्य भेषजम् औषधं निवर्तकमितियावत्। तदु तत् ब्रह्म उ = एव रोगः रुज्यते भज्यते पुरुषः अनेन इति रोगः आसुरं जन्म अनीनशत् समूलं नाशयति ॥ असुराः = असेरुरन् इति उरन् प्रत्ययः। अरुस्राणम् = स्रै पाके इत्यस्मादधिकरणे ल्युट् = अरु स्रयति पक्वं भवति उपशमनोन्मुखं भवति अनेन इत्यरुस्राणम्। आस्रावस्य = स्रु गतौ इत्यस्मात् आङ् पूर्वात् "श्याद्व्यधास्रुसंस्रु—" इत्यादिना णप्रत्ययः। "अचो ञ्णिति" इति वृद्धिः। रोगम् = रुज्यते भज्यते पुरुषः अनेनेति रोगः "हलश्च" इति करणे घञ्। "चजोः कु घिण्यतोः" इति कुत्वम्। अनीनशत् = णश धातोर्ण्यन्तात् लुङि चङि रूपम् ॥ २॥

असत्यमिति च ते = दयादिरहिता ते आसुराः जनाः जगत् संसारम् अनीश्वरम् " ईश्वरः यस्योत्पत्तिकारणं नास्ति तथाभूतम् । असत्यं मिथ्या अप्रतिष्ठम् प्रतिकृति अनेनेति प्रतिष्ठा कारणं धर्माधर्मौ न प्रतिष्ठा यस्येति अप्रतिष्ठम् धर्माऽधर्म व्यवस्था शून्यम् आहुः कथयन्ति । तथा अपरस्परसंभूतमस्ति । अपरश्च परश्च अपरस्परं मिथुनं तस्मात् संभूतम् अपरस्परसंभूतम् स्त्रीपुंसयोः संयोगात् सर्वं जातमिति वदन्ति । अथ च कामहैतुकम् स्त्रीपुंसयोः काम एव हेतुर्यस्य तत्कामहेतुकम्, कामहेतुकम् एव कामहैतुकम् जगत् इति मन्यते किमन्यत् ततोऽन्यत् अदृष्टं कारणं किमस्तीति प्राहुः । दृष्टं विहाय अदृष्टधर्मादिकल्पना व्यर्थी एवेति ज्ञेयम् ॥ ८ ॥

(मूलगी.) असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥
(वेदगी.) प्र सु स्तोमं भरत वाजयन्त इन्द्राय सत्यं यदि सत्यमस्ति ।
नेन्द्रो अस्तीति नेम उ त्व आह क ईं ददर्श कमभि ष्टवाम ॥ ३
ऋ. अष्ट. ६ अध्या. ७ व. ४ मं. ३ (मंड. ८ अनु. १० सू. १००मं. ३)

प्रसु इति = हे जनाः ! वाजयन्तः स्वोदरपालनाय अन्नम् इच्छन्तः यूयं यद्वा संसारसंग्राममभिइच्छन्तो यूयं " वाजे " इति संग्रामनामसु पाठात् । इन्द्राय परमैश्वर्यवते परमात्मने सत्यं सत्यभूतं स्तोमं स्तुतिं सु सुष्ठु प्रभरत प्रकुरुत । पामरा जना वदन्ति । यदि सत्यम् ईश्वरोऽस्ति इति स्तुतिं कुर्मः । परञ्च नेमः विख्यातयशस्कः एव इन्द्रः परमेश्वरः लोकस्वामी त्वा, कश्चित् नास्तीति । तत्र कारणं दर्शयति कः पुरुषः ईम् एनं परमेश्वरं ददर्श अद्राक्षीत् पश्यतीति न कोऽप्यपश्यत् न कोऽप्यद्राक्षीत् अतः अपरस्परसंभूतं कामहैतुकं म अनीश्वरम् असत्यं जगत् मन्यमानाः वयं कम् ओंकारनामानं परमेश्वरम् अभिष्टवाम ~~अभि~~ अभिष्टुमः । तस्मात्परमेश्वरो नाम कश्चिद्विद्यते इतिवादमात्रं न तु तत्सत्यमिति भावः ॥ ३ ॥

एतामिति= एतां दृष्टिं नास्तिकविचारम् अवष्टभ्य आश्रित्य नष्टात्मानः नष्टः विनाशं गतः आत्मा विवेकबुद्धिर्येषां ते नष्टात्मानः अल्पबुद्धयः अल्पे तुच्छे देहे बुद्धिः येषां तेऽल्पबुद्धयः, उग्रकर्माणः उग्रं क्रूरं शास्त्रमर्यादाविरुद्धं कर्म येषां ते उग्रकर्माणः अहिताः परहितशून्याः जगतः संसारस्य क्षयाय विनाशाय प्रभवन्ति समर्थाः भवन्ति ॥९॥

(मूलगी०) एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥९॥

(वेदगी०) अयं लोकः प्रियतमो देवानामपराजितः।
यस्मै त्वमिह मृत्यवे दिष्टः पुरुष जज्ञिषे
स च त्वानु ह्वयामसि मा पुरा जरसो मृथाः ॥१८॥
अथ० कां० ५ अनु० ६ सू० ३० मं० १७

देवानां देवैः यद्वा विद्वद्भिः

अयमिति= हे पुरुष! हे जीवात्मन्! ~~देवानाम् इन्द्रियमणानाम्~~ अयं लोकः इदं शरीरं प्रियतमः अतिशयेन प्रियः, अपराजितः पराजयरहितः अस्ति। यस्मै यन्निमित्ताय त्वं जीवात्मा इह अस्मिन् शरीरे स्थित्वा मृत्यवे मृत्युनिमित्ते दिष्टः शापितः सन् जज्ञिषे उत्पन्नः भवसि। स च त्वं जीवात्मा तस्मात् लोकात् शरीरात् पृथक् असि। त्वा त्वां जीवात्मानम् अनुह्वयामसि आहूय आहूय अनुबोधयामि। जरसः पुरा वृद्धावस्थातः पूर्वं मा मृथाः मृत्युं मा प्राप्नुहि ॥१८॥

कामम् इति=दुष्पूरं विषयभोगेनाऽपि पूरयितुम् अशक्यं कामं मनोरथम् आश्रित्य अवलम्ब्य दम्भमानमदान्विताः दम्भः बाह्यतः धर्मित्व चिन्हम् मानः स्वस्मिन् उत्कृष्टतरत्वाभिनिवेशः, मदः धनबलाऽभिजनबलाभिजनितः चित्तविकारः, तैः दम्भमानमदैः अन्विताः मिलिताः मोहात् अविवेकात् असद्ग्राहान् असत् अनर्थमेव ग्राहयन्ति संभावयन्ति इत्यसद्ग्रहाः तान् असद्ग्राहान् अनर्थनिश्चयान् गृहीत्वा आदाय अशुचिव्रताः अशुचीनि अपवित्राणि व्रतानि नियमाः येषां तेऽशुचिव्रताः भूत्वा जगतो विनाशाय प्रवर्तन्ते।

(मू-गी-) काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः।
मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥१०॥

(वेदगी-) अन्यव्रतममानुषमयज्वानमदेवयुम्। अव स्वः सखा दुधुवीत पर्वतः सुघ्नाय दस्युं पर्वतः ॥,, ऋ- अष्ट-८ अध्या-५ व-१ मं-१- (मंड-८ सू-७० मं-११) यद्वा
यो मा पाकेन मनसा चरन्तमभिचष्टे अनृतेभिर्वचोभिः। आप इव काशिना संगृभीता असन्नस्त्वाऽसत इन्द्र वक्ता,, अथ-कां-८ सू-४ मं-८ ऋ-मंड-७ सू-१०४ मं-८

अन्ये इति=सखा समानस्वरूपः सर्वमित्रः पर्वतः पर्ववान् परमात्मा अन्यव्रतं ब्रह्मातिरिक्ते वस्तुनि व्रतम् आचरणनियमः यस्य तथाभूतं जनम् अमानुषम् मनुष्यमर्यादातिक्रान्तम् अयज्वानम् अयष्टारम् अदेवयुम् अदेवकर्मिणं पापिनं दस्युम् अनार्यं सुघ्नाय सुष्ठु हन्त्रे मृत्यवे पुनः पुनर्जन्मग्रहणाय पर्वतः कर्मग्रन्थिमतः स्वः स्वर्गात् स्वर्गसुखात् अवदुधुवीत अवधुनोति अवचालयति। यो मा इति=हे इन्द्र! हे जीवात्मन्! दम्भमान मदान्वितः अशुचिव्रतः यो नास्तिको जीवः पाकेन अन्यायाऽऽचरणपरिपक्केन मनसा चेतसा एव चरन्तं सर्वत्र व्याप्नुवन्तं मा माम् परमात्मानम् अनृतेभिः अनृतरूपैः "नास्ति कश्चित् ईश्वरः, नास्ति परो लोकः, नास्ति कर्मफलम्, इत्याद्यसत्यैः वचोभिः वचनैः अभिचष्टे अभिशंसति कथयति। असतः अविद्यमानस्य विनश्वरस्य देहस्य तद्विषयस्य च वक्ता कथयिता असन् अविद्यमानः मुक्तिपदात् परिभ्रष्टः ~~असन्~~ असत् अविद्यमानः न अस्तु किन्तु विद्यमानः भवति' अर्थात् सर्वदा जगति विनश्यति। यथा च काशिना मुष्टिना संगृभीताः संगृहीताः आप इव जलानि इव अङ्गुलिविवरेभ्यः गलन्ति विशीर्णा भवन्ति ॥८॥

अनेक चिन्ह ... १६, १९ श्लोके के ...

चिन्तामिति = अपरिमेयां परिमातुम् अशक्यां प्रलयान्तां प्रलयः मृत्युरेव अन्तः अवसानं यस्याः तां मृत्युपर्यन्तां चिन्ताम् आश्रिताः अवलम्बिताः सन्तः कामोपभोगपरमाः = काम्यन्ते इति कामाः भोग्यपदार्थाः तेषाम् उपभोगः एव परमः उद्देश्यः येषां ते कामोपभोगपरमाः एतावत् विषयजन्यसुखमेव सुखम् अस्ति नान्यत्किञ्चित् इति निश्चितः सिद्धान्तो येषां ते एतावदिति निश्चिताः सन्तः आशापाशशतैः बद्धाः = आशा अप्राप्ताभिलाषाः ता एव पाशा बन्धनरज्जवः तेषां शतैः बद्धाः बन्धनं प्राप्ताः। कामक्रोधपरायणाः कामक्रोधौ परम् अयनं येषां ते कामक्रोधपरायणाः। कामभोगार्थं कामस्य विषयस्य भोगार्थम् अन्यायेन शास्त्रविरुद्धेन मार्गेण अर्थसञ्चयान् धनसञ्चयान् ईहन्ते इच्छन्ति ॥११, १२॥

(मू॰ गी॰) चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः।
कामोपभोगपरमा एतावदिति निश्चिताः ॥११॥ आशापाशशतैर्बद्धाः
कामक्रोधपरायणाः। ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥१२॥
(वेदगी॰) तेऽधराञ्चः प्रप्लवन्तां छिन्ना नौरिव बन्धनात्। न वै बाधप्रणुत्तानां
पुनरस्ति निवर्तनम् ॥ अथ॰ कां॰ ३ अनु॰ २ सू॰ ६ मं॰ ७

ते इति = ते पूर्वोक्ताः मरणान्तापरिमेयचिन्ताश्रिताः कामक्रोधपरायणाः जनाः अधराञ्चः अधोमुखं विषयाद्युपभोगं गच्छन्तः परमात्मविमुखाः सन्तः प्रप्लवन्ताम् संसारसमुद्रप्रवाहे गच्छन्ति न तु संसारार्णवपारं गच्छन्ति। बन्धनात् छिन्ना नौः इव = बध्यते अस्मिन् इति बन्धनं तीरवृक्षादिकम्। बध्नाति अनेन नावम् इति वा बन्धनं रज्जुः ततः छिन्ना वियुक्ता नौः नौका इव। सा यथा तीरम् अप्राप्ता नदीप्रवाहेण अधो नीयते तद्वत्। तेऽपि परमात्मबन्धनाद्विमुक्ताः संसारसमुद्रप्रवाहेण विमुक्तिपदात् दूरे नीयन्ते। वै बाधप्रणुत्तानाम् = विशिष्टा कामोपभोगमयी बाधो बन्धनं विबाधा, विबाधा एव वैबाधं विशिष्टसांसारिकविमोहः तेन प्रणुत्तानां प्रणुन्नानां अवाङ्मुखं प्रेरितानां शतशः कामपाशबद्धानां पुनर्निवर्तनं पुनरुद्धारः नास्ति। अधराञ्चः = अधरशब्दोपपदात् अञ्चतेः क्विन्। प्लवन्ताम् = प्लुङ् प्लुङ् गतौ भ्वादि। प्रणुत्तानाम् = "नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्" इति विकल्पनात् निष्ठायाः नत्वाऽभावः ॥७॥

इदमिति= इदमेतद्वस्तु अद्य मया लब्धं प्राप्तम्। इमं मनोरथम् अभिलाषं प्राप्स्ये लप्स्ये। इदं वस्तु सम्प्रति अस्ति इदं धनं मे मम पार्श्वे अग्रे भवि-ष्यति १३ असौ इति=असौ शत्रुः रिपुः मया हतः विनाशितः। अपरान् शत्रून् अपि हनिष्ये मारयिष्यामि। अहम् ईश्वरः विद्याधनादिस्वामी अस्मि अहं भोगी बहुपदार्थोपभोक्ताऽस्मि। अहं सिद्धः सिद्धयोगसम्पन्नः, अहं बलवान् अहं सुखी सुखसंयुक्तोऽस्मि १४ आढ्य इति=अहम् आढ्यः धनपरिपूर्णोऽस्मि। अहम् अभिजनवान् बहुपरिवारोऽस्मि, अन्यः कः पुरुषः मया सदृशः तुल्यः अस्ति। यक्ष्ये स्वमानाऽभिवृद्धये यज्ञं करि-ष्यामि। दास्यामि स्वनामप्रसिद्ध्यै नटादिभ्यो धनादिकस्य दानं करिष्यामि। मोदिष्ये दत्वा भुक्त्वा सन्तोषं प्राप्स्यामि इत्यज्ञानविमो-हिताः एवंविधेन अज्ञानेन विविधं प्रकारेण मोहिताः मोहं प्राप्ताः अनेकचित्तविभ्रान्ताः इदमद्य लब्धमिदं प्राप्स्ये इत्येवंविधैः अनेकैः ब-हुविधैः चित्तविकारैः विभ्रान्ताः विविधं भ्रान्ताः, मोहजालसमावृताः मोहः सदसद्विवेकशून्यता स मोह एव जालम् बन्धनं तेन समा-वृताः सम्यक्तया मिलिताः तिरोहिताः वा, कामभोगेषु कामानां विषयाणां भोगेषु सेवनेषु प्रसक्ताः प्रकर्षेण लग्नाः अशुचौ अशुचिरहिते मलिने नरके रौरवादि नरके पतन्ति। १३, १४, १५, १६

(मूलगी.) इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्। इदमस्तीदमपि मे भविष्यति पुनर्धनम् १३
असौ मया हतः शत्रुः हनिष्ये चापरानपि। ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्
सुखी १४ आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया। यक्ष्ये दास्यामि मो-
दिष्य इत्यज्ञानविमोहिताः। १५। अनेकचित्तविभ्रान्ता मोहजालसमावृताः। प्रसक्ताः
कामभोगेषु पतन्ति नरकेऽशुचौ ॥१६॥

(वेदगी.) नहि मे रोदसी उभे अन्यं पक्षं च न प्रति। कुवित्सोमस्यापामिति ॥७
हन्ताहं पृथिवीमिमां निदधानीह वेह वा। कुवित्सोमस्यापामिति ॥९ } ऋ. अष्ट. ८ अध्या. ६ व. २८ मं. ७, मंड. १० सू. ११९ मं. ७, ९
"या कृत्तेत्सतः प्रदिशश्चतस्रः यावत् समश्नुते। तावत्समेत्विन्द्रियं मयि
तद्धस्तिवर्चसम्" अथ. कां. ३ अनु. ५ सू. २२ मं. ५ लि. ११४
"अकर्मा दस्युरभि नो अमन्तुरन्यव्रतो अमानुषः। त्वं तस्यामित्रहन्
वधर्दासस्य दम्भय" ऋ. अष्ट. ८ अध्या. ८ मं. ८ (मंड. १० सू. २२ मं. ८)

नूतन मंत्रः ✕ अहं पचाम्यहं ददामि ममेदु कर्मन् करुणेऽधि जाया। कौमारो लोको अजनिष्ट पुत्रोऽन्वारभेथां वय उत्तरावत्, अथ. कां. १२ सू. ३ मं. ४७
अर्थ= अहं धनाढ्यत्वात पचामि लोकेभ्यः प्रदानाय अन्नं पाचयामि, अहं ददामि दीनेभ्यः धनादिकं यच्छामि. मम जाया पत्नी इत एव करुणे कर्मन् दयामये कर्मणि अधि प्रयत्नं कुरुते. ममः कौमारः पुत्रः लोकः लोकानां कल्याणाय अजनिष्ट उत्पन्नः अस्ति, उत्तरावत् वयः उच्चावस्थां प्राप्नुवत् दीर्घजीवनम् अन्वारभेथाम् उच्चकोटितया व्यतीतं भवतु।

आत्मसंभाविता: इति= आत्मसंभाविता: आत्मना स्वेनैव बहुकृता: न तु सज्जनै: अत: स्तब्धा: नम्रताविरहिता:, धनमानमदान्विता: धनेन हेतुना मानो गर्व: मदो मत्तता ताभ्यां समन्विता:, ते असुरा जीवा: नामयज्ञै: नाममात्रै: यज्ञै: न तु वैदिकलक्षणयुक्तै: यज्ञै: दम्भेन स्वमहत्वप्रसिद्ध्यै अविधिपूर्वकं शास्त्रोक्तविधिरहितं यजन्ते यजनं कुर्वन्ति ॥ १८

(मूलगी.) आत्मसंभाविता: स्तब्धा धनमानमदान्विता:।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥१८॥
(वेदगी.) अति वा यो मरुतो मन्यते नो ब्रह्म वा य: क्रियमाणं निनित्सात्।
तपूंषि तस्मै वृजिनानि सन्तु ब्रह्मद्विषमभितं शोचतु द्यौ: ॥ २ ॥
ऋ. अष्ट. ४ अध्या. ८ व. १४ मं. २ ( मंड. ६ अनु. ५ सू. ५२ मं. २) अथ. कां. २ सू. १२ मं. ६

सर्वे भये ऽधिकं मत्वा हान्त

अतिवेति= हे मरुत:! हे मरणधर्माण: जीवात्मन:। य: आत्मसंभावित:, स्तब्ध:, धनमानमदान्वित: पुरुष: ~~न: मां परमात्मानम्~~ अतिमन्यते अतीत्य ~~[illegible] मन्यते। [illegible] मदुपदिष्टवेदात् अपि अधिकोऽहमिति बुध्यते~~। य: पामर: पुरुष: ब्रह्म वेदं वा क्रियमाणं ऋत्विग्भि: क्रियमाणं ब्रह्म वेदोपदिष्टं स्तोत्रं वा निनित्सात् निन्दितुमिच्छेत्। तस्मै नीचाय स्तब्धाय पुरुषाय तपूंषि शुभलक्षणानि कर्माणि तेजांसि वा, वृजिनानि बाधकानि सन्तु सन्ति भवन्ति। द्यौ: आदित्य: सर्वप्रकाशक: परमेश्वरो वा तं ब्रह्मद्विषं वेदशत्रुं परमात्मशत्रुं वा अभिशोचतु अभिशोचति अभितपति अभिदहतीति भाव: ॥ २ ॥

अहंकारमिति- अहंकारं सर्वशास्त्रपारगत्वाद्यभिमानं बलं मिथ्यासामर्थ्यं दर्पं दृप्ततां कामं संसारादिकमिथ्याऽभिलाषं क्रोधं कोपं च संश्रिताः आश्रिताः आत्मपरदेहेषु आत्मदेहे परदेहे च ✗ व्यापकं मां प्रद्विषन्तः प्रकर्षेण द्वेषं कुर्वन्तः अभ्यसूयकाः सत्पुरुषगुणनिन्दकाः आसुराः जीवाः ये सन्ति। तान् दुष्टजनान् द्विषतः सर्वत्र मद्व्याप्तिमत्तां द्वेषं कुर्वतः यद्वा नायमात्मा न परलोकः इतिभावमाश्रित्य आत्मनि परमात्मनि च द्वेषं कुर्वतः क्रूरान् क्रूरकर्मणः दयादिशून्यान् वा नराधमान् नरेषु नीचान् अशुभान् अशुभकर्मकर्तॄन् संसारेषु संक्षिप्यन्ते भुज्यन्ते इति संसाराः जननमरणादिखेदाः तेषु आसुरीषु एव योनिषु अति क्रूरासु श्वशूकरादियोनिषु अजस्रं क्षिपामि पुनः पुनः अहमीश्वरः प्रापयामि ॥ १८, १९

(मूलगी॰) अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः। मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥१८॥ तानहं द्विषतः क्रूरान् संसारेषु नराऽधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥१९॥

(वेदगी॰) मा पृणन्तो दुरितमेन आरन्मा जारिषुः सूरयः सुव्रतासः।
अन्यस्तेषां परिधिरस्तु कश्चिदपृणन्तमभिसंयन्तु शोकाः ॥७॥
ऋ॰ अष्ट॰ २ अध्या॰ १ व॰ १॰ मं॰ ७ (मंडं॰ १ सू॰ १२५ मं॰ ७)

मेति= सूरयः विद्वांसः परमात्मस्तोतारः वा ज्ञानिनः वा, सुव्रतासः= शोभनव्रतनियमवन्तः पृणन्तः दीनेभ्यः धनादिकं यच्छन्तः, अग्निं हविरादिना प्रीणयन्तो वा मुमुक्षवः जीवाः दुरितं दुष्टं यथाभवति तथा प्राप्तं दुःखं दुरवम्, एनः तत्साधनं पापं च मा आ+अरन् सर्वतः न प्राप्नुवन्तु अत एव च मा जारिषुः जीर्णाः मा भवेयुः। तेषां सुव्रतानां दातॄणां सूरीणां वा अन्यः तेभ्योऽन्यः यः कश्चित् कोऽपि पुरुषः परिधिः पापस्य परितो धारकोऽस्तु अस्ति। यद्वा अन्यः= अन्यः कश्चन पापदेवः तेषां परिधिः परिधिस्थानीयो व्यवधायकोऽस्तु= अस्ति। तर्हि किं प्राप्नुवन्तीत्युच्यते। अपृणन्तं दैत्यादीन् अप्रीणयन्तं दीनेभ्योऽदातारम् अविद्वांसं अव्रतं शोकाः चित्तपीडाः नीचयोनिप्राप्तव्यथाः तत्साधनाः पाप्मानः अभि अभिमुखं संयन्तु सम्यक् प्राप्नुवन्ति ७ यथा च "अहमेव स्वयमिदं वदामि जुष्टं देवानामुत मानुषाणाम्। यं कामये तं तमुग्रं करोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्॥" ऋ॰ अष्ट॰ ८ अध्या॰ ७ व॰ ११ मं॰ यद्वा अथ॰ कां॰ ४ अनु॰ ७ सू॰ ३० मं॰ ३

मूढाः

आसुरीमिति= हे कौन्तेय! हे अर्जुन! कामभोगलालना लम्पटा मूढाः जन्मनि जन्मनि प्रतिजन्म आसुरीम् असुरप्रकृतिमतीम् योनिम् आपन्नाः प्राप्ताः मां मत्प्राप्तियोग्यं मानवं देहम् अप्राप्यैव मलद्रवैव ततः आसुरयोन्या अपि अधमां वृक्षपाषाणादिकां नीचगतिं यान्ति प्राप्नुवन्ति ।२०॥

(मूलगी॰) आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥२०॥

(वेदगी॰) येनानिचक्र आसुरीन्द्रं देवेभ्यस्परि ।
तेना निकुर्वे त्वामहं यथा तेऽसानि सुप्रिया ॥२॥

अथ॰ कां॰ ७ अनु॰ ३ सू॰ ३९ मं॰ २ यद्वा॰ ये पाकशंसं विहरन्त एवैर्ये वा भद्रं दूषयन्ति स्वधाभिः । अहये वा तान् प्रददातु सोम आ वा दधातु निर्ऋतेरुपस्थे,
ऋ॰ ७।१०४।९

येनेति= आसुरी असुरस्येयम् आसुरी "असुरस्य स्वम्,, "मायायाम्,, अण् इति अण्प्रत्ययः । आसुरी असुरप्रकृतिः असुरसम्पत् वा देवेभ्यः परि विद्वद्भ्यः परि देवान् विदुषः ज्ञानिनः वर्जयित्वा इन्द्रम् धनाद्यैश्वर्यसम्पन्नम् असुरप्रकृतिकं जीवं येन सम्बन्धेन निचक्रे स्वाधीनं कृतवती । हे असुरप्रकृते! जीवात्मन्! तेन सम्बन्धेन अहं परमात्मा त्वाम् आसुरप्रकृतिं जीवं निकुर्वे नीचयोनौ करोमि । तव जन्म नीचयोनौ भवतु,, इति सम्पादयामि । यथा येन प्रकारेण सा आसुरी प्रकृतिः ते तव आसुरस्य जीवस्य सुप्रिया जन्मनि जन्मनि अत्यन्तं प्रिया असाधारण्येन प्रीतिजननी असानि भवतु । देवेभ्यस्परि = "अपपरी वर्जने,, इति परिः कर्मप्रवचनीयः । पञ्चम्यपाङ्परीभिः,, इति पञ्चमी । असानि = आडुत्तमस्य पिच्च,, इत्यत्वाऽऽगमः । "मेर्निः,, इति निरूपम् ॥२॥ यद्वा ये दुष्कृतयः मां पाकशंसं परिपक्ववचनं सत्यभाषिणमेवैः = एवकैः प्राप्तव्यैः आत्मीयतत्त्वकामैः विहरन्ते विशेषेण हरन्ति परिवदन्ति ये वा स्वधाभिः धनधान्यादिभिः केवलैः भद्रं कल्याणं सज्जनं वर्तिनं मां दूषयन्ति दुष्टं कुर्वन्ति । तान् सर्वान् सोमः भगवान् ईश्वरः अहये वा सर्पाय वा प्रददातु । निर्ऋतेः पापदेवतायाः मृत्योः उपस्थे उत्सङ्गे वाऽऽदधातु प्रक्षिपतु ;;

×अस्मिन् भूते: यत्र स्वस्य धारकैः

त्रिविधमिति=आत्मनः नाशनं योगम आरूरुक्षस्य मुमुक्षोः आत्मनः नाशकम नरकस्य=नराणाम अतिशयम अकं दुःखं यत्र तत् नरकम शाकम्भर्यादिवत्पारत्र्यमस्ति। तस्य नरकस्य द्वारं प्रवेशमार्गः इदम "कामः, क्रोधः, तथा लोभः" इतीदं त्रिविधं त्रिप्रकारकम अस्ति तस्मात् नरकद्वारप्रवेशकारणत्वात् एतत् त्रयं चाण्डालमिव कामं कृष्णसर्पमिव क्रोधं मलमिव लोभं त्यजेत् दूरत एव परिहरेत ॥२१॥

(मूलगी.) त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् ॥२१॥
(वेदगी.) त्रिते देवा अमृजतैतदेनस्त्रित एनन्मनुष्येषु ममृजे।
ततो यदि त्वा ग्राहिरानशे तां ते देवा ब्रह्मणा नाशयन्तु ॥१॥
अथ. कां. ६ सू. ११३ मं. १

त्रिते इति=देवाः विद्वांसः ज्ञानिनः पुरुषाः त्रिते त्रिभिः कामक्रोधलोभैः युते आसुरप्रकृतौ जीवे एतत् नरकद्वारात्मकम एनः पापम अमृजत निमृष्टवन्तः निमार्जनेन स्थापितवन्तः। त्रितः कामक्रोधलोभसमन्वितः स च जन एव एतत् स्वात्मनि समवेतं कामक्रोधलोभमयं सर्वपापमयं दुर्व्यसनं मनुष्येषु सर्वेषु मनुष्येषु ममृजे मृष्टवान् निमार्जनेन स्थापयति। ततः तस्मात् हेतोः यदि=यद्युक्तदार्थेऽस्ति। यदि=या ग्राहिः ग्रहणशीला ग्राहक त्री पापदेवता त्वा त्वां दैवीसम्पदं जीवम आनशे प्राप प्राप्नोति, ते त्वदीयां तां ग्राहिं भूयोभूयः जन्मदात्री पापदेवता ब्रह्मणा ब्रह्मज्ञानेन तत्साधनेन च देवाः विद्वांसः योगिन एव नाशयन्तु नाशयन्ति ॥१॥

एतैरिति= हे कौन्तेय! हे अर्जुन! नरः मुमुक्षुः विद्वान् तमोद्वारैः तमसः नरकस्य द्वारैः द्वारभूतैः त्रिभिः त्रिसंख्याकैः एतैः कामक्रोधलोभैः विमुक्तः विशेषेण निर्मुक्तः सन् आत्मनः स्वस्य श्रेयः स्वकल्याणम् आचरति सम्यक् तया अनुतिष्ठति। तेन आचरणेन समुत्पन्न ज्ञानेन वा परां गतिं मोक्षं याति प्राप्नोति ॥२२॥

(मूलगी.) एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥२२॥

(वेदगी.) इमे उग्रा मृत्युपाशाः यानाक्रम्य न मुच्यसे।
अमुष्या हन्तु सेनाया इदं कूटं सहस्रशः ॥१६॥
अथ. कां. ८ अनु. ४ सू. ८ मं. १६

(उत.) उपनि. गी. सं. ति

इमे इति= हे मुमुक्षो! हे विद्वन्! इमे कामक्रोधलोभाः मृत्युपाशाः मृत्योः पुनः पुनर्मरणस्य पाशाः बन्धनरूपाः सन्ति। यान् कामक्रोधलोभात्मकान् मृत्युपाशान् आक्रम्य प्रधर्ष्य विनाश्य न मुच्यसे मुक्तिं प्राप्तुम् अशक्तोऽसि। अमुष्याः सेनायाः कामक्रोधलोभस्वरूपायाः सेनायाः इदं कूटम् एतदनुभूयमानं स्त्रैणं सहस्रशः सहस्रधा कृत्वा हन्तु जहि, एतद्धननानन्तरं मोक्षं प्राप्स्यसीति सिद्धान्तः ॥१६॥

य इति: यः नरः शास्त्रविधिं विधीयते ऽपूर्वो अर्थो बोध्यते ऽनेनेति विधिः तं कर्तव्याकर्तव्यार्थ प्रकाशकं चोदनाविधिं निषेधं च उत्सृज्य त्यक्त्वा अमत्य वा कामकारतः स्वेच्छातः वर्तते स्वकर्तव्यकार्योऽनुष्ठानं करोति। सः स्वेच्छाधीन प्रवृत्तः पुरुषः सिद्धिं स्वेष्टकार्य समाप्तिं न आप्नोति न प्राप्नोति। न सुखं स्वर्गीयं सुखं न प्राप्नोति। न च परां गतिं न विमोक्षं प्राप्नोति॥२३॥

(मूलगी०) यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥२३॥

(वेदगी०) परः सो अस्तु तन्वा३ तना च तिस्रः पृथिवी रधो अस्तु विश्वाः।
प्रति शुष्यतु यशो अस्य देवा यो नो दिवा दिप्सति यश्च नक्तम्॥११॥

ऋ० अष्ट० ५ अध्या० ८ व० ८ मं० ११ (मं० ७ सू० १०४ मं० ११) अथ० कां० ८ अनु० २ सू० ४ मं० ११

पर इति: सः दुष्टप्रकृतिः आसुरः पुरुषः तना विस्तृतेन तन्वा स्वकीयेन शरीरेण परः अस्तु अस्ति (लकार व्यत्ययः) शरीरवियुक्तो भवति। अस्मात् शरीरात् वियुक्तो भूत्वा शरीरान्तरं गच्छति। एवं संसारार्णवे सर्वदा भ्रमतितमाम्। अथ च स एव विश्वाः सर्वाः तिस्रः पृथिवीः त्रीन् लोकान् अधः अधो अस्तु अस्ति भवति लोकत्रयादपि च्युतो भवती त्यर्थः। अर्थात् लोकत्रयादपि अधस्तात् नरके वर्तमानो भवति। हे देवाः! हे विद्वांसः! हे मुमुक्षवः! अस्य यशः अन्नं कीर्तिर्वा प्रति शुष्यतु प्रतिशुष्यति विनश्यति "लकार व्यत्ययः।" यश्च आसुरः पुरुषः नः मां परमात्मानं मत्प्रोक्तां वेदवाणीं वा दिवा नक्तम् अहर्निशम् सदैव दिप्सति जिघांसति दूरीकर्तुमिच्छति दूरीकरोति च॥११॥

तस्मादिति= हे अर्जुन! शास्त्रविरुद्धाऽऽचरणवताम् अधोपातः, तस्मात् कारणात् ते तव मुमुक्षोः कार्याऽकार्यव्यवस्थितौ एतत्कर्म कर्तव्यम्, एतत्कर्म अकर्तव्यम् अस्ति इति व्यवस्थापने शास्त्रं श्रौतं स्मार्तं शास्त्रं प्रमाणं तत्तदर्थप्रमापकम् अस्ति। इति ज्ञात्वा अवबुध्य शास्त्रविधानोक्तं शास्त्रविधानेन कथितं कर्म कर्तुं सम्पादयितुम् इह अस्मिन् संसारे अर्हसि योग्योऽसि नान्यथा॥२४॥ इति श्रीजगन्नाथशास्त्रिसंकलितायां गीतावेदार्थबोधिन्यां षोडशोऽध्यायः॥१६॥

(मूलगी.) तस्माच्छास्त्रं प्रमाणं ते कार्याऽकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि॥२४॥
इतिश्रीमद्भ.गी. दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्यायः१६

(वेदगी.) इन्द्रो यज्वने गृणते च शिक्षत उपेद्ददाति न स्वं मुषायति।
भूयोभूयो रयिमिदस्य वर्धयन्नभिन्ने खिल्ये निदधाति देवयुम्॥२
अथ. कां. ४ अनु. ५ सू. २१ मं. २ ऋ. मं३. ६ सू. २८ मं. २ तै. ब्रा. २।८।८।११

इन्द्र इति= हे मुमुक्षो! इन्द्रः सर्वैश्वर्यवान् परमात्मा यज्वने अग्निहोत्रादियागं कुर्वते कर्मनिष्ठाय गृणते स्तुवते च मुमुक्षवे जनाय शिक्षते वेदशास्त्रशिक्षां प्रयच्छति उपदिशति वा। उपेद्= स्वयं परमात्मैव तस्य मुमुक्षोः हृदये उपेत्य ददाति शास्त्रज्ञानं ददात्येव। तस्य यज्वनः स्तोतुश्च स्वं कर्तव्याऽकर्तव्यविचारधनं न मुषायति न मुष्णाति नापहरति। अपितु भूयोभूयः बहुवारं अस्य यज्वनः स्तोतुश्च रयिं ज्ञानं वर्धयन् समृद्धं कुर्वन् इत्= एव, वर्तते। एतत्तु ऐहिकफलम्। आमुष्मिकफलमप्युपदिशति परमात्मा। तं देवयुं देवं परमात्मानम् इच्छन्तं यज्वानं स्तोतारञ्च अभिन्ने दुःखेन असंभिन्ने नित्यसुखोपेते खिल्ये खिलम् अप्रहतं स्थानं तत्रभवं खिल्यं तस्मिन् परमधामनि अयज्वभिः अगम्ये अनाक्रान्ते पदे निदधाति स्थापयति। शिक्षते= शिक्ष विद्योपादाने। देवयुम् – देवशब्दात् "सुप आत्मनः क्यच्", "न छन्दस्यपुत्रस्य" इतीत्वदीर्घयोः प्रतिषेधः "क्याच्छन्दसि" इति उप्रत्ययः॥२॥ इति श्रीसारस्वताभ्युपलैधानास्त्व्यान्वयभूषण जगन्नाथशास्त्रिज्योतिर्विदटीकृतायां वेदगीतायां वेदार्थबोधिन्यां षोडशोऽध्यायः समाप्तः॥१६॥

~~कर्षयन्त इति~~ अशास्त्रेति = दम्भाहंकारसंयुक्ताः दम्भः वेशभूषादिना बाह्याऽऽडम्बरः, अहंकारः कुलाद्युत्कृष्टताजन्यः अभिमानः, ताभ्यां संयुक्ताः। कामरागबलान्विताः = कामः शब्दस्पर्शादिविषयः रागः शब्दाद्युपभोगपुष्ट, बलं तदिच्छावेगः, तैः अन्विताः मिलिताः अचेतसः अज्ञानिनः मूढाः शरीरस्थं देहे विद्यमानं, भूतग्रामं प्राणेन्द्रियग्रामं कर्षन्तः भोजनाद्यभावेन शोषयन्तः अन्तः शरीरस्थं माम् अन्तःशरीरं बुद्धिः तत्र सर्वप्रकाशकतया विद्यमानं मां परमात्मानं कर्षयन्तः उपवासाद्यतिश्रान्त्या कृशीकुर्वन्तः ये जनाः अशास्त्रविहितं शास्त्राऽप्रतिपादितं घोरं पीडाकरं तपः कृच्छ्रचान्द्रायणादिकं तपः तप्यन्ते = उपवासादिना कायं ये शोषयन्ति। तान् दम्भादियुक्तान् जनान् आसुरनिश्चयान् आसुराणां निश्चयो येषां तान् आसुरनिश्चयान् विद्धि जानीहि ॥ ५-६ ॥

(मूलगी०) अशास्त्रविहितं घोरं ~~ये~~ तप्यन्ते तपो जनाः। दम्भाहंकारसंयुक्ताः
कामरागबलान्विताः ॥५॥ कर्षयन्तः शरीरस्थं भूतग्राममचेतसः मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥६॥

(वेदगी०) अदेवेन मनसा यो रिषण्यति शासामुग्रो मन्यमानो जिघांसति।
बृहस्पते! मा प्रणक् तस्य नो वधो नि कर्म मन्युं दुरेवस्य
शर्धतः ॥ ऋ० अष्ट० २ अध्या० ६ व० ३१ मं० १२ (मं० २ सू० २३ मं० १२)

अदेवेनेति = हे बृहस्पते! हे बुद्धिमन्! हे तत्त्वज्ञानिन्! यः पुमान् जनः अदेवेन देवान् अमन्यमानेन अप्रकाशमानेन वा शास्त्रमर्यादारहितेन वा मनसा मनसा, यद्वा आसुरवृत्तिविशिष्टेन मनसा रिशण्यति = दैवीं वृत्तिं हिनस्ति। यश्च जनः उग्रः पापवित्तः मन्यमानः स्वकुलाद्यभिमानेन आत्मानं बहु मन्यमानः जनः शासो शास्त्रशिष्टो जिघांसति हन्तुमिच्छति। तस्य आसुरवृत्तेः जनस्य वधः आयुधं शास्त्रमर्यादानाशकवृत्तिः नोऽस्मान् दैवान् जीवान् मा प्रणक् मा स्पृशतु। दुरेवस्य दुष्टगतिकस्य मन्युं दुष्टतानं निकर्म त्वं त्वत्प्रसादात् स्वस्मात् निराकुर्मः ॥ १२ ॥ तुलना = गीतायां शास्त्रविधिं परित्यज्य दम्भेन कामरागबलैश्च आत्मानं पीडयन्ति ते आसुरी जीवाः सन्ति, अर्थात् मनुष्याः सन्तोऽपि राक्षसा भवन्तीत्युक्तम्। वेदेऽपि आत्महननं, दुष्टविचारः, दुष्कर्मव्यवहारः, अभिमानं दम्भः इत्यादिकं कर्म शास्त्रमर्यादां परित्यज्य मनुजः कुरुते। तथाविधैः पुरुषैः सङ्गोऽपि कदाऽपि न कार्यः! इत्युक्तम्।

आहार इति = सर्वस्य प्राणिमात्रस्य आहारः भोजनं त्रिविधः त्रिप्रकारः प्रियः भवति। एवं यज्ञः, तपः, तथा दानं सात्त्विकं, राजसं, तामसम्, इति त्रिविधः भवति। तेषाम् आहारयज्ञतपोदानानाम् इमम् मन्ते वक्ष्यमाणं भेदं शृणु ॥७॥ आयुरिति = आयुषः चिरजीवनस्य, सत्त्वस्य अन्तःकरणस्य उत्साहस्य बलस्य देहेन्द्रियशक्तेः आरोग्यस्य रोगाऽनुदयस्य सुखस्य चित्तप्रसन्नतायाः प्रीतेः रुच्याः विवर्द्धनाः वर्द्धकाः रस्याः रसोपेताः, मधुराः स्निग्धाः स्नेहमिलिताः स्थिराः चिरस्थायिनः हृद्याः दुर्गन्धादिदोषरहिताः मनोहराः आहाराः भोजनानि सात्त्विकप्रियाः सत्त्वगुणविशिष्टानां पुरुषाणां प्रियाः सन्ति ॥८॥ कट्विति = कटुः अतितिक्तः, अत्यम्लः आम्लकरससदृशाः अतिलवणाः बहुलवणोपेताः अत्युष्णाः अतितीक्ष्णाः बहुलमरिचादिः। रूक्षः स्नेहरहितः विदाही दाहोत्पादकः सर्षपादिः एते आहाराः भोजनानि राजसस्य रजोगुणविशिष्टस्य इष्टाः प्रियाः सन्ति। एते आहाराः दुःखशोकामयप्रदाः तत्कालदुःखदायिनः पश्चात् शोकराजयक्ष्मादिरोगप्रदायिनः सन्ति ॥९॥ यातयाममिति = यातयामं याता परिगता यामाः प्रहराः यस्मात्, तद् यातयामं गतरसं शुष्करसं पूति दुर्गन्धि पर्युषितम् च यत् बहुप्रातनम् उच्छिष्टं परभुक्तभोजनशेषम् अमेध्यम् अपवित्रं यज्ञशेषरहितं भोजनम् आहारः तामसप्रियं तमोगुणविशिष्टानां जनानाम् प्रियं भवति ॥१०॥ अफलेति = यष्टव्यम् ईश्वरप्रीत्यै अवश्यमेव यजनीयमिति मनः चित्तं समाधाय संकल्प्य अफलाकांक्षिभिः फलाकांक्षारहितैः निष्कामैः कर्मठैः विधिदृष्टः शास्त्रप्रोक्तविध्युपेतः यः यज्ञः इज्यते विधीयते सः यज्ञः सात्त्विकः सत्त्वगुणविशिष्टः भवति ॥११॥ अभिसंधायेति = हे भरतश्रेष्ठ! हे भरतर्षभ! हे अर्जुन! फलं स्वकृतयज्ञादिजनितस्वर्गादिफलम् अभिसंधाय संयोज्य इज्यते क्रियते। अथ च दम्भार्थम् अपि स्वमहत्तादर्शनमात्रार्थं यः यज्ञः इज्यते। तं यज्ञं राजसं रजोगुणविशिष्टं विद्धि जानीहि ॥१२॥

नूतनः मंत्रः "पुण्यं हवं मह्यमिहि," अथ. कां. १९ सू. ८ म. ५ अथ. तपं पुण्यं धर्मवर्द्धक मायुरादिवर्द्धक ...

(मूलगी.) आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः। यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥७॥ आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः। रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥८॥ कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः। आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥९॥ यातयामं गतरसं पूति पर्युषितं च यत्। उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥१०॥ अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते। यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥११॥ अभिसंधाय तु फलं दम्भार्थमपि चैव यत्। इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥१२॥

नूतनः मंत्रः "यातयाम..." वेदगीता अथ. कां. ११ सू. ...

(वेदगी.) ... श्रोतं मन्ये केऽधनि श्रोत मानो ... श्रुतं मन्ये तद्दत्तं न वीपः। ... हिनस्य सवनस्य दधः पिबेन्द्र वज्रिन् पुरुकृज्जुषाणः। इन्द्र ऋ. १०।१५।१४ अथ. कां. ... ८ २ म. ३

× श्लो. ९ नष्टमेतत्कटुकमेतद्वाश्लवदुष्टमेतत्तत्त्वे, ऋ. १०।८५।३४ श्लो. ८ ... धृतेन त्वं तन्वं ...

"तद्दोम हविः ... मावैरूरजः ..." ऋ. ८ ...

देवद्विजेति = देवाः अग्न्यादयः यद्वा देवः ईश्वरः द्विजाः श्रोत्रिय ब्राह्मणाः प्राज्ञाः ब्रह्मवेतारः, तेषां पूजनमादरसत्कारः सेवा वा, शौचं बाह्याभ्यन्तर पवित्रता आर्जवम् सरलप्रकृतित्वम् ब्रह्मचर्यं वीर्यसंरक्षणम् अहिंसा कस्याऽपि प्राणिनः अपीडनम् एतत्तु वै शारीरं तपः शरीरेण निर्वर्त्यत्वात् शारीरं तपः उच्यते कथ्यते ॥१४॥

(मूलगी.) देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥१४॥
(वेदगी.) यदग्ने तपसा तप उपतप्यामहे तपः।
प्रियाः श्रुतस्य भूयास्मायुष्मन्तः सुमेधसः ॥१॥
अथ. कां. ७ अनु. ६ सू. ६३ मं. १

यदग्ने इति = हे अग्ने! हे विद्वन्! तपसा तव सम्बन्धिना पर्युक्षणपरिसमूहनसमिदाधानादिरूपेण कर्मणा यत् शारीरं तपः निर्वर्तयितव्यमस्ति। तत् तपः उप त्वत् = सात्विकत्वेन त्वत्समीपे तप्यामहे आर्जयामः। यद्वा तपसा कृच्छ्रचान्द्रायणादिरूपेण यत् तपः तपनं शरीरखेदनं "तपः क्लेशसहिष्णुत्वम्" इति तद्विदः। कृच्छ्रव्रतादिचरणेन यच्छरीरशोषणं तत् तप उपतप्यामहे। तव समीपे परिचरणेन आर्जयाम इत्यर्थः। यद्वा तप पर्यालोचने इत्यस्मात् असुन्। पर्यालोचनेन देवताविषयज्ञानेन "मनसश्चेन्द्रियाणां चैकाग्र्यं तप उच्यते" इति हि तद्विदः। सहार्थे तृतीया। तेन तपसा सहितं तपः कृच्छ्रचान्द्रायणादिरूपो नियमः इति योगद. २।३२। तत् तपः हे अग्ने! त्वत्समीपे परिचरणेन तप्यामहे आर्जयामः। "तपस्तपःकर्मकस्यैव" इति कर्मकर्तरि यक् आत्मने पदे। तेन तपसा श्रुतस्य सम्यक् अधीतस्य वेदशास्त्रादेः प्रियाः प्रियतमः सुहृदः निवासस्थानत्वेन प्रीणयितारः आयुष्मन्तः दीर्घकालजीविनाः सुमेधसः शोभनधारणशक्तिसहिताः भूयास्म ॥१

तुलना - गीतायां देवद्विजगुरुप्राज्ञपूजनम्, शारीरिकशुद्धिः मनसि देहे ऋजुता च ब्रह्मचर्यपालनं अहिंसा, शारीरं तपः उच्यते वेदेऽपि शरीरेण तपश्चर्या, वेदशास्त्रविधानुकूलता दीर्घायुषः शुभबुद्धेः प्राप्तिसाधना नीत्युक्तम्।

अनुद्वेगकरमिति= अनुद्वेगकरं कठोरतारहितम् सत्यं यथार्थं प्रियहितं श्रवणे प्रियं श्रवणानन्तरं कल्याणकरं यत् अस्ति। पञ्च स्वाध्यायाभ्यसनं स्वाध्यायः वेदोऽध्ययनं, तदभ्यासः पुनः पुनरुच्चारणम् एतत् वाङ्मयं वाचा निर्वर्त्यमानत्वात् वाङ्मयं तप उच्यते ॥१५॥

(मूलगी॰) अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत्।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥१५॥
(वेदगी॰) सूनृतावन्तः सुभगा इरावन्तो हसामुदाः।
अतृष्या अक्षुध्याः स्त गृहा मास्मद् बिभीतन ॥ ६
अथ॰ कां॰ ७ अनु॰ ६ सू॰ ६२ मं॰ ६

सूनृतावन्त इति= हे गृहाः! हे गृहस्थाश्रमवासिनः मुमुक्षवः जीवाः। यूयं सूनृतावन्तः "प्रियसत्यात्मिका सूनृता इत्युच्यते" तद्वन्तः प्रियसत्यवादिनः सत्यप्रियहितवाक्यानां वक्तारः स्त भवत। अरिष्टादिनिमित्तवाग्राहित्येन पुत्रमित्रादिसम्पत्तिनिमित्तवाक्सहिता भवत इत्यर्थः। सुभगाः स्त शोभनभाग्योपेताः भवत। इरावन्तः स्त = इरा अन्नं वाणी वा तद्वन्तः भवत। हसामुदाः स्त। हासेन मोदमानाः भवत। गृहस्थानां हासेन तदीयः सन्तोषोऽभिव्यज्यते हासाऽभिव्यक्तसन्तोषा भवत। अतृष्याः स्त = तृषा कामः तद्रहिताः भवत। अक्षुध्याः क्षुधे बुभुक्षा लोभे च अर्हन्तीति अक्षुध्याः क्षुधारहिताः निर्लोभाः भवत। एतद्गुणविशिष्टाः वाङ्मयतपोरताः यूयम् अस्मत् गृहस्थाश्रमव्यतिरिक्तात् वीतरागात् अस्मत्तः मा बिभीतन भयं मा प्राप्नुत। हसामुदाः = हासे हसने भावे क्विप् तदन्तात् तृतीया हसा इति। मोदते: इगुपधलक्षणः कः॥" तत्पुरुषे कृति बहुलम् इति बहुलग्रहणात् तृतीयाया अलुक्। अक्षुध्याः अतृष्याः = क्षुत् तृष्णा शब्दाभ्याम् "तदर्हति" इत्यर्थे "छन्दसि च" इति यप्रत्ययः। स्त = अस्तेर्लोटि मध्यमबहुवचने रूपम्। बिभीतन = ञिभी भये लोटि तस्य तनादेशः। ६॥

तुलना = गीतायां अनुद्वेगकरं सत्यवाक्यं प्रियं हितञ्च, नित्यमेव स्वाध्यायः वाचिकं तप उच्यते
वेदेऽपि सः गृहस्थः तपते यः सत्ये प्रियं हिते वचनं भाषते स एव प्रसादोन्मुखः तृषाक्षुधाविहीनः वाचिकः तपस्वी उच्यते ॥

मन इति = मनसः प्रसादः प्रसत्तिः केनाऽपि विषयेण अविचलम्। सौम्यत्वं सर्वहितकर्तृत्वम् अक्रूरता वा। मौनं ध्यानपरायणः मुनिः मुनेर्भावः मौनम् एकाग्रवृत्त्या परमात्मचिन्तनमित्यर्थः। आत्मविनिग्रहः असम्प्रज्ञातसमाधिना मनोनिरोधनम्। भावसंशुद्धिः भाव्यतेऽर्थोऽनेनेति भावः अन्तःकरणम् तस्य रागद्वेषादिदोषाऽसम्पर्कः यद्वा व्यवहारकाले कपटराहित्यम्। इत्येतत् तपः मानसं मन एकसाध्यत्वात् मानसमुच्यते मुनिभिः कथ्यते ॥१६॥

(मूलगी.) मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥१६॥

(वेदगी.) अग्ने तपस्तप्यामहे उप तप्यामहे तपः।
श्रुतानि शृण्वन्तो वयमायुष्मन्तः सुमेधसः ॥२॥
अथ. कां. ७ अनु. ६ सू. ६१ मं. २ यद्वा "यन्तं यन्तं मनसा बृहन्तमन्वारोहामि तपसा सयोनिः। उपहूता अग्ने जरसः परस्तात् तृतीये नाके सधमादं मदेम ॥" ४ अथ. कां. ६ सू. १२२ मं. ४

अग्ने इति = हे परमात्मन्! वयं मानसिकतपस्विनः तपः मनःप्रसादसौम्यत्वमौनात्मकं मानसं तपः नियमं तप्यामहे आर्जयामः। उपतप्यामहे तव समीपमागन्तुं तादृशं भावशुद्ध्यात्मकं तपः साधयामः। तेन मानसेन तपसा श्रुतानि सम्यक् अधीतानि वेदशास्त्रादीनि शृण्वन्तः कर्णाभ्याम् आकर्णयन्तः मनसा मन्यमानाः वेदशास्त्रश्रवणमननोद्देतोः वयम् आयुष्मन्तः दीर्घकालजीविनः सुमेधसः समीचीनधारणाशक्तियुक्ताश्च भूयास्म इति शेषः ॥ २ ॥

यन्तमिति = (तपसा) तपोयुक्तेन मनसा (यन्तम्) गच्छन्तं (बृहन्तम्) बृहत्तमं (यज्ञम्) यज्ञं (सयोनिः) समानस्थाने उत्पन्नः सन् अहं (अनु) अनुकूलतया (आरोहामि) आरोहणं करोमि। प्राप्नोमीत्यर्थः। हे अग्ने! हे परमात्मन्! जरसः वृद्धावस्थातः परस्तात् परं (उपहूताः) आमन्त्रितं प्राप्ताः सन्तः तृतीये स्वर्गधामनि सधमादम् सहैव स्थित्वा मदेम सुखं प्राप्नुमः ॥४॥

तुलना = गीतायां मनसः उपरतिः सौम्यत्वं, मौनता, मनसोऽवग्रहः मानसिकवृत्तिशुद्धता मानसं तप उच्यते। वेदेऽपि च वेदशास्त्रश्रवणमनननिदिध्यासनम् मानसिकतप उच्यते। मानसिकयज्ञेन परमधामप्राप्तिरपि जायते इत्युक्तम्।

मनुष्यैः

श्रद्धयेति = युक्तैः परमात्मनि मनोलग्नैः अफलाकांक्षिभिः स्वकृतयज्ञादिकर्मफलाभिलाषाशून्यैः नरैः परया अत्युत्कृष्टया श्रद्धया त्रिविधं मनसा वाचा कायेन कृतं त्रिप्रकारकं तप्तं तपः सात्विकं सत्वगुणविशिष्टं परिचक्षते कथयन्ति ॥ १७ ॥

(मूलगी.) श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकांक्षिभिर्युक्तैः सात्विकं परिचक्षते ॥ १७

(वेदगी.) श्रद्धाया दुहिता तपसोऽधिजाता स्वसा ऋषीणां भूतकृतां बभूव ।
सा नो मेखले मतिमाधेहि मेधामथो नो धेहि तप इन्द्रियञ्च ॥ ४ ॥
अथ. कां. ६ अनु. १३ सू. १३३ मं. ४ श्रद्धा "तेऽवर्धन्त स्वतवसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः ।
विष्णुर्यद्धावद् वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये ॥" ऋ. मं. १ सू. ८५ मं. ७

श्रद्धाया इति = श्रुतिस्मृत्यादिकर्मसु (वचनेषु) आस्तिक्यबुद्धिः श्रद्धा तस्याः दुहिता पुत्री सात्विकतपश्चर्या अस्ति । सा च सात्विकतपश्चर्या तपसोऽधिजाता सृष्ट्यादौ ब्रह्मणः तपसः उत्पन्ना । यद्वा परया श्रद्धया कृतेन तपसाऽधिजायते ऽतः भूतकृतां भूतग्रामस्य स्वायत्तकर्तृत्वानाम् ऋषीणां कृतकर्मफलाकांक्षाशून्यानां परमात्मभक्तियुक्तानां मुनीनां स्वसा सहोत्पन्ना बभूव अस्ति लकारव्यत्ययः । हे मेखले । तपश्चर्यायां मनोबन्धनकर्त्रि ! रज्जुस्वरूपे ! हे मते ! सा चित्तैकाग्र्यकर्त्री सात्विकी (तपश्चर्या) ~~मति~~ त्वं नोऽस्माकं सात्विकतपोवृत्तिमतां मतिम् आत्माभिगोचरां बुद्धिम् आधेहि आभिमुख्येन कुरु । तथा मेधां श्रुतधारणसमर्थां बुद्धिम् आधेहि धारय । अथो अपि च तपः सात्विकनियमविशेषं कायिकं वाचिकं मानसं तपः इन्द्रियं इन्द्रस्य आत्मनः लिङ्गं सत्वस्वरूपं नः अस्माकं ~~विधेहि कुरु~~ ॥ ४ ॥ धेहि धारणं कुरु अर्थात् प्रदानं कुरु

तुलना = गीतायां फलाकांक्षाविहीनः श्रद्धान्वितः कायिकं वाचिकं मानसिकं तपः सात्विकं कथयन्तीत्युक्तम् । वेदेऽपि सात्विकवृत्तिः सात्विकतपश्च यां च श्रद्धा दुहिताऽस्ति ऋषिभिः सहोत्पन्ना स्वाभाविकी ऋषीणां मतिः सात्विकवृत्त्या : कृतं तपः सात्विकं विद्वांसः कथयन्तीत्युक्तम् ॥

सत्कारेति= सत्कारमानपूजार्थं सत्कारार्थं स्वस्तुत्यर्थं मानार्थम् अभ्युत्थानादिसम्मानार्थं पूजार्थं स्वदेहादिसेवार्थं दम्भेन वेषभूषादि प्रकाशनेन यत् तपः क्रियते विधीयते। तत् तपः इह अस्मिन् लोके सत्कारप्रभृतिदायकं भवति न तु परलोके। तत् तपः अध्रुवम् अदृढम् चलं सामयिकफलप्रदं यत्तप अस्ति। तत् तपः राजसं रजोगुणविशिष्टं पण्डितैरुक्तम् ॥१८॥

(मूलगी.) सत्कारमानपूजार्थं तपो दम्भेन चैव यत्।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥१८॥
(वेदगी.) देहि मे ददामि ते नि मे धेहि नि ते दधे।
निहारं च हरासि मे निहारं निहराणि ते स्वाहा ॥ यजुः ३.५०

देहीति= हे मित्र! स्वाहा सम्यक् तया आह भवान् कथयति। मे मह्यं प्रथमं देहि। ततः ते तुभ्यं नि= नितरां ददामि देयं पदार्थं यच्छामि। मे मम प्रथमं धेहि धारय। पश्चात् अहमपि ते तुभ्यं पदार्थं नि= नितरां दधे धारये। मे मह्यं निहारं नितराम् हरणं निहारः अवश्यकर्तव्यम् उच्यते। यद्वा "मूल्येनक्रेतव्यं वस्तु नि= नितरां ह्रियते इति। निहारं मूल्येन क्रेतव्यं वस्तु च समर्पये हरासि हरासि ~~...~~ त्वम्। अहमपि ते तुभ्यं निहारं पदार्थमूल्यं निहराणि नि= नितरां प्रयच्छानि। सर्वमेतद्रजोगुणविशिष्टम् अर्थात् राजसम् अस्ति ॥१८॥
तुलना= गीतायां सत्कारार्थं ~~स्व~~मानार्थं ~~स्व~~पूजार्थं पाखण्डेन यत्तपः विधीयते तद्राजसं तप उच्यते।
वेदेऽपि वस्तु दत्त्वा वस्तुग्रहणं, ~~किन्तु~~ स्वार्थमुद्दिश्य द्रव्यदानं राजसं तप उच्यते

मूढेति = मूढग्राहेण विवेकाऽविवेकज्ञानशून्यः मूढः तस्य ग्राहः ग्रहणं तेन मूढग्राहेण अत्यन्ताऽविवेकबुद्ध्या आत्मनः स्वस्य पीड़या देहकष्टेन यत् त्रिविधं कायिकं वाचिकं मानसं तपः क्रियते वाऽथवा परस्य शत्रोः उत्सादनार्थं विनाशार्थम् यत् तपः क्रियते तत् तपः तामसं तमोगुणविशिष्टम् उदाहृतम् कथितमिति ॥१९॥

(मूलगी.) मूढग्राहेणात्मनो यत्पीडया क्रियते तपः।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥१९॥

(वेदगी.) दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे।
अपामर्थं यतीनां ब्रह्मा भवति सारथिः ॥६
ऋ. अष्ट. २ अध्या. ३ व. १ मं. ६ (मंड. १ सू. १५८ मं. ६)

दीर्घतमा इति = दीर्घतमाः दीर्घं बहु तमः अज्ञानं मूढता यस्य, तथाभूतः दीर्घतमाः अतिशयेन तमोगुणविशिष्टः यद्वा मूढतमः मामतेयः ममतायाः अहं महान् प्रवृद्धोऽस्मि अयं मत्तः हीनतरः इत्यभिमानस्य पुत्रः मामतेयः बहुभिमानयुक्तः पुरुषः, जुजुर्वान् विषयसेवनैः अतीव जीर्णः सन् अर्थं मुखैः पुरुषैः अर्थ्यमानं ~~कर्मफलं स्वर्गादिकं~~ धनादिकं लौकिकं स्वकीयम् यद्वा परोत्सादनादिकं यतीनां प्राप्नुवन्तीनाम् अपाम् अपसां सांसारिक कर्मणां सारथिः वाहकः दशमे युगे दशयुगपर्यन्तं बहुकालं यावदित्यर्थः। ब्रह्मा तत्र दृढतरः भवति अर्थात् बहुकालं यावत् विषयोपभोक्ता तमःप्रकृतिकः भवति ॥६॥

तुलना = गीतायां ~~स्व~~ देह इन्द्रियाणि वा संपीड्य शत्रुविनाशार्थं वा यत्कर्म क्रियते तत् तामसं तप उच्यते।
वेदेऽपि महामूढः, ममतायाः पुत्रः विषयसेवनेन जर्जरीभूतः संसारे दुष्कृत्येषु अग्रणीः तामसीं क्रियां कुर्वन् तामसः पुरुष उच्यते तत्कर्म च तामसमुच्यते

५८॰ पं॰४ तते तन्तु मन्वेके तरन्ति येषां दत्तं पित्र्यमायनेन । अबन्ध्वेके ददतः प्रयच्छन्तो दातुं चेच्छिक्षान्त्स स्वर्ग एव ,, अथ॰ कां॰ ६ सू॰ १२२ मं॰ २

वेदगीता यद्वा " स पचामि स ददामि स यजे स दत्तान्मा यूषम् ,, अथ॰ कां॰ ६ सू॰ १२३ मं॰ ४ " ततमिति = एके

दातव्यमिति = दातव्यं दातुं योग्यं यद्दानम् अनुपकारिणे दानानन्तरम् उपकारकर्तृत्वहीनाय देशे योग्यस्थाने काले समये पात्रे अधिकारिणि च दीयते, तत् दानं सात्त्विकं सत्वगुणविशिष्टं ~~[illegible]~~ । विदुः कथयन्ति ॥ २० ॥

(मूलगी॰) दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं विदुः ॥ २० ॥

(वेदगी॰) आर्षेयेषु निदध ओदन त्वा नानार्षेयाणामप्यस्त्यत्र । अग्निर्मे गोप्ता मरुतश्च सर्वे विश्वेदेवा अभि रक्षन्तु पक्वम् ,, अथ॰ कां॰ ११ अनु॰ १ सू॰ १ मं॰ ३३ (यद्वा)

" न भोजा मम्रुर्न न्यर्थमीयुर्न रिष्यन्ति न व्यथन्ते ह भोजाः । इदं यद्विश्वं भुवनं स्वश्चैतत्सर्वं दक्षिणैभ्यो ददाति ,, ऋ॰ अष्ट॰ ८ अध्या॰ ६ व॰ ४ मं॰ ८ (मं॰ १० सू॰ १०७ मं॰ ८) यद्वा

" पृणीयादिन्नाधमानाय तव्यान् द्राघीयांसमनु पश्येत पन्थाम् । ओ हि वर्तन्ते रथ्येव चक्रान्यमन्यमुप तिष्ठन्त रायः ,, ५ ॥ ऋ॰ अष्ट॰ ८ अध्या॰ ६ व॰ २२ मं॰ ५ (मं॰ १० सू॰ ११७ मं॰ ५) पद॰

आर्षेयेषु इति = हे ओदन ! हे पात्रे देयान्न ! त्वां त्वाम् आर्षेयेषु ऋषिगुणवत्सु पात्रेषु ब्राह्मणेषु निदधे नितरां धारयामि । देशे काले पात्रे दातव्यं दीयतेऽतः त्वामपि पात्रब्राह्मणेषु धारयामि । अत्र अस्मिन् दाने अनार्षेयाणाम् ऋषिगुणैः शून्यानां कुपात्राणाम् अपि संभावनाऽपि नास्ति न विद्यते " अपि संभावनायाम् । अग्निः अग्रणी देवः परमात्मा मे मम गोप्ता गोपायिता रक्षिताऽस्ति । तथा सर्वे च प्राणात्मकाः मरुतः मरुत्संज्ञकाः देवाः मम गोप्तारः सन्ति । अपि च विश्वे सर्वे देवाः मित्रवरुणार्यमादयः पक्वं पक्वेन संस्कृतम् इमम् ओदनम् अभि रक्षन्तु अभितः पालयन्तु । गोप्ता = गुपू रक्षणे तृचि " आयादय आर्धधातुके वा ,, इति आयप्रत्ययाभावः । पक्वम् = " पचेः कर्मणि निष्ठा " " पचो वः ,, इति वः । भोजाः भोजयितारः पात्रे धनदातारः न मम्रुः न म्रियन्ते । सर्वदा तन्नाम जगति तिष्ठति । यद्वा देवत्वं भजन्ते अत एव न्यर्थं व्याध्यादिकं दुर्गतिं नेयुः न प्राप्नुवन्ति, तथा न रिष्यन्ति कैश्चिदपि हिंसिता न भवन्ति । अत एव भोजाः दातारः न व्यथन्ते परस्परं नभीता न बाधिता वा भवन्ति । किञ्च इदं दृश्यमानं विश्वं सर्वं भुवनं भूतजातमस्ति । स्वः स्वर्गलोकश्च एतत्सर्वं दक्षिणा स्वयम् एभ्यः ददाति भोजेभ्यो ददाति । पृणीयात् = पूरयेत् । तव्यान् तवीयान् धनैरतिशयेन प्रवृद्धः पुरुषः नाधमानाय याचमानाय अतिथये पृणीयात् दद्यात् धनानि देयात् एव । द्राघीयांसं दीर्घतमं पन्थां पन्थानं सुकृतमार्गम् अनुपश्येत भवलोकयेत । तत्र कारणमाह । रायः धनानि ओ हि आ उ वर्तन्ते खलु एकत्र न तिष्ठन्ति । दृष्टान्तमाह रथ्या इव = रथ्या रथ्यानि रथस्य चक्राणि च क्रान्ति उपर्यधोभावेन आवर्तन्ते । तद्वत् अन्यम् अन्यम् धनानि उपतिष्ठन्ते समवेतानि भवन्ति । उपाद्देवपूजासंगतिकरण इत्यात्मनेपदं तस्मात् धनानि देयानीति भावः । पृणीयात् = पृ पालनपूरणयोः क्र्यादिः । प्वादीनां ह्रस्वः । द्राघीयांसम् = दीर्घशब्दादीयसुनि " प्रियस्थिर ,, इत्यादिना द्राघ् आदेशः । अनुपश्येत । व्यत्ययेन आत्मनेपदम् । रथ्या = रथाद् यत् ,, इति तस्येदमर्थे यत् " ५ ॥

तुलना = गीता यो दद्देशे, सुसमये सुपात्रे दातव्यदानं सात्त्विकदानमुच्यते ।

वे॰ ऽपि सात्त्विकदानदातृणां पुरुषाणां नाम चिरं तिष्ठति, दानेन तद्वित्तं क्षीयते, धनं अस्थिरं मन्वानाः तेन ध्रुवं पदं लभन्ते सात्त्विकदाने सर्वोत्तमं गण्यते ॥ ६

यत्विति = यत् दानं तु प्रत्युपकारार्थं स्वस्मिन् उपकारत्वप्राप्तये वा अथवा पुनः फलं कमपि लाभम् उद्दिश्य लक्ष्यीकृत्य दीयते पुनश्च दानानन्तरं परिक्लिष्टं लोभातिशयेन अन्तःकरण क्लेशसंयुक्तं यद्दानमस्ति। तद्दानं राजसं रजोगुणविशिष्टम् उदाहृतं मुनिभिः कथितम् ॥ २१ ॥

*. यद्वा नूतनः मंत्रः "देवो दद्त्वा वरं तद्वो अस्तु सुचेतनम्।
युष्मां अस्तु दिवे दिवे प्रत्येवं गृभायत„ अथ कां. २० सू. १३५ मं. ८

अर्थः = देवाद्‌इति नदैवाः दानिपुरुषाः आ समन्तात् वरं वरणयोग्यं सर्वश्रेष्ठं धनं ददते दाने कुर्यात्। तत् तद्धनम् वः युष्मान् किंभूताः पुरुषान् सुचेतनम् सम्यक्तया चेतनतत्कारकं अस्तु। दिवे दिवे प्रतिदिनं युष्मान् पुरुषान् अस्तु तद्धनमेव अस्तु अथ च भवान् तद्धनं प्रतिगृभायत एव स्वीकुरु „ इति

(मूलगी.) यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः।
दीयते च परिक्लिष्टं तद्राजसमुदाहृतम् ॥ २१ ॥

(वेदगी.) स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय।
अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायम् ॥ ३ ॥

ऋ. अष्ट. ८ अध्या. ६ व. २२ मं. ३ (मंड. १० सू. ११७ मं. ३) यद्वा देवस्य वयं सवितुः सवीमनि श्रेष्ठे स्याम वसुनश्च दावने। यो विश्वस्य द्विपदो यश्चतुष्पदो निवेशने प्रसवे चासि भूमनः „ ऋ. मं. ६ सू. ७१ मं. २.*. यद्वा

स इति = स इत् स एव भोजः दाता राजसोऽस्ति। यः गृहवे प्रतिग्रहीत्रे अन्नकामाय अन्नं याचमानाय चरते गृहमागत वते कृशाय दरिद्राय दारिद्र्येण क्षीणाय अन्नं ददाति प्रयच्छति। यामहूता = यामहूतौ यामा गन्तारो देवाः ते आहूय न्तेऽत्रेति यामहूतिः यज्ञः तस्मिन् यज्ञे अस्मै रजोगुणविशिष्टाय दात्रे फलम् अरम् अलं पर्याप्तं भवति कामप्रदानं भ वतीत्यर्थः। उत अपि अपरीषु अन्यासु प्रजासु सखायं सख्यं कृणुते करोति। तस्य सर्वे नराः सखाय एव भवंति, न शत्रवः। गृहवे = गृहे मृगय्वादित्वात् कुप्रत्ययः। यामहूतौ = याते: अर्तिस्तुसुहुसृ— „ इत्यादिना मन् प्रत्ययः अपरीषु = केवलमामकेति ङीप् ॥ ३ ॥ "देवस्येति" वयं राजसाः पुरुषाः सवितुः जगदुत्पादकस्य देवस्य ज्योतिः स्वरूपस्य परमेश्वरस्य सवीमनि प्रसवे सृष्टौ अनुज्ञाने वा "यथाह यास्कः "सवीमनि प्रसवे„ निरु. ६ श्रेष्ठे अतिशयेन प्रशस्ते वसुनः धनस्य दावने दाने स्याम समर्थाः भूयास्म। यः त्वं परमेश्वरः विश्वस्य सर्वस्य द्विपदः भूमनः भूरेश्चतुष्पदः चतुष्पादस्य पश्वादेश्च निवेशने स्वस्वकर्मपालनाय स्थितौ प्रसवे उत्पादने च तत्तत्कर्मानुसारेण असि स्वतंत्रः असि ॥ २ ॥



ऐतेना = गीतायां यद्दानं कमपि प्रत्युपकारमुद्दिश्य दीयते अर्थात् एतत्पदार्थं दत्त्वाऽस्मात् इमं पदार्थं ग्रहीष्यामि यद्वा कमपि लाभं मनसि निधाय मनः क्लिष्टकारकं यद्दानं दीयते, तद्राजसं दानमुच्यते। इति कथितम्। वेदेऽपि दान[illegible] गृहीतुः पार्श्वे गत्वा इति न पार्श्वे त्वेव यः समेत्य दानं ग्रहीष्यति तद्दा[illegible]मीति [illegible] गृहमागताय दद्[illegible]
दीयते तद्राजसदानमुच्यते।

अदेशेति=अदेशकाले स्वच्छस्थाने सुसमये अपात्रेभ्यः पात्रत्वशून्येभ्यः जनेभ्यः असत्कृतं सत्काररहितं पूजारहितमित्यर्थः। अवज्ञातं महाग्रण एतत् इत्यवमानपूर्वकं यत् दानं दीयते। तत् दानं तामसं तमोगुणविशिष्टम् उदाहृतं कथितम् ॥२२।

(मूलगी॰) अदेशकाले यद्दानमपात्रेभ्यश्च दीयते।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥२२॥

(वेदगी॰) बभ्रे रक्षः समदमा वपेभ्योऽब्राह्मणा यतमे त्वोपसीदान्। ऋ॰सू॰ १ मं॰ ३२
पुरीषिणः प्रथमानाः पुरस्तादार्षेयास्ते मारिषन् प्राशितारः ॥३२॥ अथ॰ कां

बभ्रे इति=हे बभ्रे! हे भरणशील! हे अन्न! अब्राह्मणा ब्रह्मज्ञानशून्याः पामराः कुपात्राः यतमे ये त्वा त्वाम् उपसीदान् दान ग्रहणार्थं तदनुप्राशनार्थम् उपसन्नाः भवेयुः। एभ्यः अब्राह्मणेभ्यः कुपात्रेभ्यः रक्षःसमदम् रक्षोजात्या सह दुष्टजीवैः सह मदनम्। यद्वा समानं माद्यन्ति अस्मिन् इति समत् संग्रामः। राक्षसैः दुष्टजीवैः सह कलहम् आवप प्रक्षिप। राक्षसकृतां पीडां प्रापयेत्यर्थः। कुपात्रदानं निन्दां कृत्वा सुपात्रदानं प्रशंसति। ये तु आर्षेयाः ऋषिगणयुक्ताः पुरीषिणः पृणाति पूरयति वा पुरीषं प्रजापश्वादिकं तद्वन्तः प्रजापश्वादि पालकाः। यास्कस्तु "पुरीषं पृणातेः पूरयतेर्वा (निरु॰ २।२२)" "प्रजा वै पशवः पुरीषम्," प्रजया एवैनं पशुभिः पुरीषवन्तं करोति। तै॰सं॰ २।६।४, ३। अत एव प्रथमानाः लोके दानादिभिः प्रसिद्धिं प्राप्ताः ते तव प्राशितारः पात्रत्वेन भोक्तारः मारिषन् हिंसां मा प्राप्नुवन्तु। बभ्रेः=डुभृञ् धारणपोषणयोः "आदृगमहनजनः किकिनौ लिट् च," इति किप्रत्ययः। यतमे=वा बहूनां जातिपरिप्रश्ने," इति यच्छब्दात् डतमच्। तदन्तस्य सर्वनामसंज्ञायां जसः शीभावः। रिषन्=रिष हिंसायाम् ॥३२॥ कालनिषेधे शंखस्मृतौ "आहारं मैथुनं निद्रां सन्ध्याकाले तु वर्जयेत्। कर्म चाऽध्ययनं चैव तथा दानप्रतिग्रहौ। ~~किं च प्रसङ्गे यथा रात्रौ दानं न कर्तव्यं कदाचिदपि केनचित् हरन्ति राक्षसा यस्मात् तस्माद्दातुर्भयावहम्,~~ अपात्रलक्षणमाह गोपालांश्च वाणिजिकांस्तथा। कारुकुशीलवान्। प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्," तथा च यमस्मृतावपि "अपेताः स्वकर्मभ्यः परपिण्डोपजीविनः। द्विजत्वमभिकांक्षन्ति तांश्च शूद्रवदाचरेत्," "अकृतानाममन्त्राणां जातिमात्रोपजीविनाम्। नैषां प्रतिग्रहो देयो न शिला तारयेच्छिलाम्," व्यासस्तु ... । वसिष्ठोऽप्याह "नष्टे शौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते। रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम्," मनुरप्याह "पात्रभूतो हि यो विप्रः प्रतिगृह्य प्रतिग्रहम् असत्सु विनियुञ्जीत तस्य देयं न ...

तुलना=गीतायां कुपात्रे कुदेशकाले दत्तं तामसमित्युच्यते। वेदे तु अत्रे कुपात्रं न निमित्तमपि इति, सुपात्रस्य स्वरूपमपि उदाहृते इति कथितम् ॥

ओं तदिति = ओम्, तत्, सत्, इति ब्रह्मणः परमेश्वरस्य निर्देशः, निर्दिश्यते इति निर्देशः = नाम त्रिविधः त्रिप्रकारकः स्मृतः कथितः। तेन नाम त्रितयेन परमात्मना ब्राह्मणाः ब्रह्म एव लोकिताः वेदाः ऋगादयश्चत्वारो वेदाः यज्ञाः श्रौताः स्मार्ताः सर्वे यज्ञाः पुरा सृष्ट्यादौ विहिताः विरचिताः ॥२३॥

(मूलगी.) ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥२३॥

(वेदगी.) त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः। अग्ने दक्षैः पुनीहि नः ॥२६॥
ऋ. अष्ट. ७ अध्या. २ व. १८ मं. २६ (मं. ९ सू. ६७ मं. २६) यद्वा
"त्रिरस्य ता परमा सन्ति सत्या स्पार्हा देवस्य जनिमान्यग्नेः।
अनन्ते अन्तः परिवीत आगाच्छुचिः शुक्रो अर्यो रोरुचानः ॥७॥
ऋ. अष्ट. ३ अध्या. ४ व. १७ मं. ७ (मं. ४ सू. १ मं. ७)

त्रिभिरिति = हे देव! हे देदीप्यमान! हे स्तुत्य! हे सवितः! हे सर्वजगदुत्पादयितः! हे सोम! हे पवमानगुणविशिष्ट! हे पतितपावन! हे अग्ने! हे ज्योतिःस्वरूप परमात्मन्! त्वं वर्षिष्ठैः सर्वेभ्यः श्रेष्ठैः वृद्धतमैर्वा दक्षैः सर्वसामर्थ्यवद्भिः त्रिभिः "ओम्, तत्, सत् इति त्रिसंख्याकैः धामभिः नामभिः धाम नाम भवति। यथाह यास्कः "धामानि त्रयाणि भवन्ति। स्थानानि नामानि जन्मानीति निरु. ९।२८ नः अस्मान् भक्तान् पुनीहि पवित्रीकुरु परिशुद्धान् कुरु ॥२६॥ त्रिरस्येति = देवस्य प्रकाशमानस्य ज्योतिःस्वरूपस्य अस्य अग्नेः अस्य परमात्मनः त्रिः ता = तानि "ओम्, "तत्," सत्," इति प्रसिद्धानि परमा परमाणि अत्युत्तमानि सत्या = सत्यानि सत्यस्वरूपाणि सर्वदा स्थितिमन्ति जनिमानि जगदुत्पादकानि त्रिः ओं, तत्, सत्," इति नामानि स्पार्हा सर्वैः स्पृहणीयानि सन्ति। अनन्ते हृदयाकाशे अन्तर्मध्ये स्वतेजसा परिवीतः परिवेष्टितः शुचिः सर्वस्य शोधकः शुक्रः दीप्तियुक्तः ज्योतिःस्वरूपः अत एव रोरुचानः भ्राजदी[redacted]प्यमानः अर्यः = सर्वस्वामी "अर्यः स्वामिवैश्ययोः," परमात्मा आ + अगात् = आसमन्तात् अस्माकं हृदये आगच्छतु। सत्या = शेश्छन्दसि बहुलम्," इति शेर्लुक्। परिवीतः = व्येञ् संवरणे। कर्मणि क्तः, यजादित्वात् सम्प्रसारणम्," अर्यः = ऋ गतौ इति यत्प्रत्ययान्तो निपातितः ॥७॥

तुलना = गीतायां आज्ञाप्ता दर्शितं सर्वे सुखा लोकाः सर्वशुभकर्मारंभे "ओं, तत्, सत् इति परमात्मनः नामत्रयं गृहीत्वा कार्यं विदधति येन सर्वाणि कर्माणि निर्विघ्नं समाप्नुवन्तीत्युक्तम्। वेदेऽपि च "ओं, तत्, सत्, इति परमात्मनः नामानि सर्वोत्तमानि गण्यन्ते, ये मनुष्याः सर्वकर्मारंभे "ओं तत् सत् इत्युच्चार्य कार्यं कुर्वन्ति तेषां कार्यं निर्विघ्नं समाप्नोतीत्युक्तम्," ५४२

हे अर्जुन! मोक्षकाङ्क्षिभि: मोक्षाऽभिलाषुकैः श्रोत्रैः फलं स्वकृतकर्मजन्यं फलम् अनभिसंधाय फलाऽभिसंधिम् अकृत्वा यज्ञतप:क्रियाः श्रौतादिकाः यज्ञक्रियाः शारीरकक्लेशहेतुभूताः तपःक्रियाः विविधाः नानाप्रकाराः दानक्रियाः कन्यागोदानादीनि कर्माणि तत् इति पदप्रयोगेण क्रियन्ते विधीयन्ते ॥ २५ ॥

(मूलगी·) तदित्यनभिसंधाय फलं यज्ञतप:क्रिया: ।
दानक्रियाश्च विविधा: क्रियन्ते मोक्षकाङ्क्षिभि: ॥ २५ ॥

(वेदगी·) तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥ १ ॥
ऋ· अष्ट· ४ अध्या· ४ व· २५ मं· १ (मं· ५ अनु· ६ सू· ८२ मं· १) (यद्वा)
तदूचुषे मानुषेमा युगानि कीर्तेन्यं मघवा नाम बिभ्रत् । उपप्रयन् दस्युहत्याय
वज्री [illegible] यद्ध सूनुः श्रवसे नाम दधे ॥ ४ ॥ ऋ· अष्ट· १ अध्या· ७ व· १६ मं· ४
मं· १ सू· १०३ मं· ४

तदिति = हे परमात्मन्! भगस्य सर्वैः भजनीयस्य देवस्य स्वप्रकाशेन द्योतमानस्य सवितुः जगदुत्पादकस्य परमात्मनः भोजनं सर्वैः कर्मिभिः भोज्यं स्वस्वकर्मारम्भे व्यवहरणीयं श्रेष्ठं प्रशस्यं सर्वधातमं सर्वपदार्थधातृतमं तुरं पापहिंसकं "तत्" इति नाम वयं यज्ञादिकर्मानुष्ठातारः वृणीमहे गृह्णीमहे । अथ च "तत्" इति नाम धीमहि ध्यायेमहि धारयामः वा ॥ १ ॥

तदूचुषे इति = परब्रह्मणः "तत्" इति नाम ऊचुषे सर्वकर्मारम्भे उक्तवते यजमानाय कीर्तेन्यं लोके लोकैः कीर्तनीयं यशः बिभ्रत् धारयन् मघवा पूज्यः परमात्मा मानुषा = मानुषाणि मनुष्याणां सम्बन्धीनि इमा इमानि युगानि अहोरात्राणि षष्ठ्या यानि श्रौतस्मार्तकर्माणि निष्पादयतीति शेषः । वज्री = दुर्जनदण्डविधानाय वज्रधारी सूनुः सर्वजगदुत्पादकः परमात्मा यत्-ह = यत् खलु नाम "तत्" इति नाम दस्युहत्याय दस्यूनां पापस्वरूपाणां शत्रूणां हत्याय हननाय उपप्रयन् कर्मानुष्ठातृसमीपमागच्छन् श्रवसे कल्याणाय जयलक्षणाय यशसे वा दधे धृतवान् । ऊचुषे = ब्रूञ् व्यक्तायां वाचि । "ब्रुवो वचिः" लिटः क्वसुः "वचिस्वपियजादीनां किति" इति सम्प्रसारणम् चतुर्थ्येकवचने "भसंज्ञायां" "वसोः सम्प्रसारणम्" इति सम्प्रसारणम् । "शासिवसिघसीनां च" इति षत्वम् । कीर्तेन्यम् = कृत संशब्दने "कृत्यार्थे तवैकेन्केन्यत्वनः" इति केन्यप्रत्ययः । मघवा = मघशब्दो धनवाचकः मतुप् "छन्दसीवनिपौ" इति वनिप् । बिभ्रत् = डुभृञ् धारणपोषणयोः । शतरि [illegible] इति च ।
उपनिषद्ध्यवक्रमम् "तदिति वा एतस्य महतो भूतस्य नाम"

तत्त्व = गीतायां मायास्वरूपायां शय्यायां सुप्तोऽयं जीवः सर्वाऽभिलाषाशून्यः मोहनिद्रात्मक: "तत्" इति परमात्मनाम, सर्वकर्मसु उच्चारयति अतः तस्य यज्ञदानतपांसि सिद्धिं समाप्नुवन्तीत्युक्तम् । वेदेऽपि उपनिषद्यपि च भगवतोऽयं नाम "तत्" इत्यस्ति यस्मिन् उच्चारिते परमात्मा भक्तरक्षां विधातुं स्वयमेवागच्छति । तं संरक्ष्य मुक्तिधाम्नि तं प्रेषयतीत्युक्तम् ।

सद्भावे इति = हे पार्थ! हे अर्जुन! सद्भावे सतो ब्रह्मणो भावः सद्भावः, सद्भावे = ब्रह्मभावे। साधुभावे सत्यतायां वा साधुभावे सद्वृत्ततायाञ्च विद्वद्भिः सत् इतिशब्दः प्रयुज्यते प्रयोगः क्रियते। तथा च तेनैव प्रकारेण प्रशस्ते कर्मणि मंगलकर्मणि सच्छब्दः सच्छब्दस्य प्रयोगः विधीयते २६ यज्ञे श्रौतस्मार्तादि यज्ञे तपसि शारीरिकतपश्चर्यायां दाने च गोदानकन्यादानप्रभृतौ च स्थितिः अवस्थितिः "सत्" इति उच्यते कथ्यते। तदर्थीयं परमेश्वरनिमित्तं कर्म सत् इत्येव अभिधीयते कथ्यते॥ २७॥

(मूलगी.) सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते। प्रशस्ते कर्मणि तथा सच्छब्दः
पार्थ युज्यते॥ २६॥ यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते। कर्म
चैव तदर्थीयं सदित्येवाभिधीयते॥ २७।

(वेदगी.) सदस्य मदे सद्वस्य पीताविन्द्रः सदस्य सख्ये चकार।
रणा वा ये निषदि सत्ते अस्य पुरा विविद्रे सदु नूतनासः॥ २॥
ऋ. अष्ट. ४ अध्या. ६ व. २३ मं. २ (मं. ६ अनु. ३ सू. २७ मं. २)

सदस्येति = इन्द्रः सर्वैश्वर्यसम्पन्नः परमात्मा अस्य यजमानस्य मदे प्रसन्नतायै सत् "सद्भावस्वरूपोऽस्ति। अस्य यजमानस्य पीतौ जलपानादिकर्मणि "सद्" सद्भावम् अभिधत्ते। अस्य भक्तस्य सख्ये परस्परं सखित्वेऽपि "सत्" सच्छब्दं चकार करोति। ये रणाः स्तोतारः सन्ति ते निषदि यज्ञतपोदानात्मके गृहे पुरा आदौ एव सत् सत्स्वरूपात्मकं शब्दं विविद्रे लभन्ते। नूतनासः ~~इदानीन्तनाः~~ स्तोतारः सदु = सत् एव सकलशुभकर्मणि सच्छब्दमेव व्यवहरन्ति॥ २॥

तुलना = गीतायां यज्ञदानतपांसि सद्भावयुक्तानि स्युः यज्ञादिकानामारम्भे "सत्" इतिशब्दः प्रयोक्तव्यः। येन सर्वाणि कर्माणि निर्विघ्नं समाप्नुयुः इत्युक्तम्।
वेदेऽपि च परमात्मा स्वभक्तप्रसन्नतायै "ओं" "तत्" इतिनामभ्यां सह "सत्" इतिशब्दोऽपि प्रयुक्तः, भोजनादिकर्मसु तथा यज्ञदानतपःसु ~~स्थितौ~~ स्थितौ "सत्" इत्येषः शब्दः प्रयोक्तव्यः, येन सर्वाणि कार्याणि निर्विघ्नं समाप्स्यन्ती त्युक्तम्।

✗ दैवीजीवन अवलोक्य राज स्मा मस्य अन्ये जनाः अपि

अश्रद्धया इति = अश्रद्धया = श्रद्धारहितत्वेन यत् हुतम् अग्नौ चरुरूपं हविः प्रक्षिप्तं। यत् दत्तं ब्राह्मणादिभ्योऽन्नादिकं दानत्वेन दत्तं यत् तपः शरीरेण तप्तं यत् कृतं श्रौतस्मार्तं कर्म कृतं भवति। तत् सर्वं कृतं कर्म असत् निष्फलम् उच्यते कथ्यते। हे पार्थ! हे अर्जुन! श्रद्धाशून्यं बहुप्रयासकृतं तत्कर्म प्रेत्य मरणानन्तरं परलोकसुखाय न भवति न च इह अस्मिन् जन्मनि सुखनिमित्तं भवति। २८

इति श्री लेखावासि जगन्नाथ शास्त्रि संकलितायां गीतावेदार्थबोधिन्यां सप्तदशोऽध्यायः समाप्तः ॥१७॥

(मूलगी.) अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत्।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥
इति श्रीमद्भग. सप्तदशोऽध्यायः समाप्तः ॥१७॥

(वेदगी.) श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि,, ऋ. मं. १०. सू. १५१ मं. १

अर्थ: = अग्निः श्रद्धया समिध्यते। हविः श्रद्धया हूयते। भगस्य परमात्मनः मूर्ध्नि वचसा वेदवचसा श्रद्धां वेदयाम विज्ञापयाम, १ "प्रत्ययो धर्मकार्येषु तथा श्रद्धेत्युदाहृता। नास्ति ह्यश्रद्दधानस्य धर्मकृत्ये प्रयोजनम्, इति स्मृतिः। अग्निपुराणे — श्रद्धा धर्मः परः सूक्ष्मः श्रद्धा ज्ञानं हुतं तपः। श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धा सर्वमिदं जगत्,, "सर्वस्वं जीवितं वापि दद्यादश्रद्धया यदि। नाप्नुयात्तत्फलं किञ्चित् श्रद्धादानं ततो भवेत्,,

तुलना = गीतायां श्रद्धया, दानयज्ञतपांसि शुभानि हानि, परन्तु अश्रद्धया कृतानि तानि तथाऽन्यान्यपि शुभकर्माणि इह परत्र च न सुखमावहन्तीत्युक्तम्।
वेदस्मृतिपुराणेष्वपि च श्रद्धया कृतं यज्ञदानादिकर्म मुक्तिदातृ भवति परन्तु अश्रद्धया विहितानि तान्येव इह परत्र च सुखकारकाणि न भवन्तीत्युक्तम्॥

इति श्री लेखावासस्थ सारस्वतान्वयकाशपाल ज्ञाति ओ. टी. न्यायभूषण जगन्नाथ शास्त्रीकृतायां वेदगीतार्थबोधिन्यां सप्तदशोऽध्यायः समाप्तः १७।

(अथाऽष्टादशोऽध्यायारंभः)

"यस्य निःश्वसितं वेदः यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनः यातः कुरुक्षेत्रे युदर्णवम् ॥१॥
वेदो गीता तथा गीता वेद एव न संशयः। वेदगीतापृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनात् ॥२॥

अर्जुन उवाच। संन्यासस्येति= हे महाबाहो! महान्तौ बाहू यस्य स महाबाहुः, तत्संबुद्धौ हे महाबाहो! हे महाभुज! हे हृषीकेश! हृषीकाणाम् इन्द्रियाणाम् ईशः स्वामी हृषीकेशः, तत्संबुद्धौ हे हृषीकेश! हे केशिनिषूदन! केशिनामानं दैत्यं निषूदितवान् यद्वा केशिनः सूर्यादिप्रकाशकान् निषूदितवान् हिंसितवान् इति केशिनिषूदनः, तत्संबुद्धौ हे केशिनिषूदन! संन्यासस्य संन्यासशब्दार्थस्य त्यागस्य च त्यागशब्दार्थस्य च पृथक् विभज्य तत्त्वं सत्यस्वरूपं वेदितुं ज्ञातुम् इच्छामि अभिलषामि ॥१॥
श्रीभगवानुवाच। काम्यानामिति= कवयः संन्यासतत्त्वज्ञातारः विद्वांसः काम्यानां पुत्रेष्टिज्योतिष्टोमादीप्सितानां कर्मणां न्यासं परित्यागमेव विदुः जानन्ति। तथा विचक्षणाः बुद्धिमन्तः सर्वकर्मफलत्यागं सर्वेषां काम्याऽकाम्यानां नित्यनैमित्तिकानां कर्मणां फलस्य फलमात्रस्य त्यागं परित्यागं प्राहुः कथयन्ति ॥२॥

अर्जुन उवाच

(मूलगी.) संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम्।
त्यागस्य च हृषीकेश! पृथक्केशिनिषूदन ॥१॥ श्रीभगवानुवाच
काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥२॥

त्याज्यमिति = एके कतिपयाः मनीषिणः विद्वांसः दोषवत् दूषणयुक्तं पापात्मकं कर्म त्याज्यं त्यक्तव्यं प्राहुः कथयन्ति। तपः कर्म "यज्ञो दानं तपः इति वैदिकं कर्म न त्याज्यम् इति अपरे विद्वांसः प्राहुः ॥३॥

(मूलगी.) त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥
(वेदगी.) अयज्ञियो हतवर्चा भवति नैनेन हविरत्तवे।
छिनत्ति कृष्या गोर्धनाद् यं क्रव्यादनुवर्तते ॥ ३८
अथ. कां. १२ अनु. २ सू. २ मं. ३८

यं यज्ञस्य अकर्तारम् उद्दिश्य
अयज्ञिय इति = यं जनम् अनुक्रव्याद् = क्रव्यम् आममांसम् अत्तीति क्रव्यात् मांसभक्षकः अनुवर्तते। सः पुरुषः अयज्ञियः यज्ञानर्हः, स एव हतवर्चाः निस्तेजस्कः भवति। एनेन एवंविधपुरुषहस्तद्वारा हविः यज्ञस्य हविष्कं न अत्तवे भक्षणाय योग्यं न भवति। स एव कृष्याः कृषिप्रभृतिकर्मणः तथा गोः गोप्रभृतिपशुभ्यः, तथा धनात् धनसम्पत्तेः छिनत्ति वञ्चितो भवति। ३८।

यज्ञदानेति=यज्ञः दानं तपः, श्रौतस्मार्तयज्ञः, सत्पात्रे वस्त्रवर्णादिकं दानं स्वाध्यायप्राणायामादयः, इतिकर्म न त्याज्यं न त्यक्तव्यम्। तत् यज्ञदानतपः इतिकर्म कार्यं यथाविधि कर्तव्यमेव। यज्ञः, दानं, तपः च एतानि त्रीणि मनीषिणां सदसद्विवेकिनां मुमुक्षुपुरुषाणां पावनानि पवित्रकर्तृणि सन्ति ॥ ५ ॥ हे भरतसत्तम! हे भरतकुलश्रेष्ठार्जुन! तत्र पूर्वोक्ते त्यागे काम्यकर्मत्यागे सर्वकर्मफलत्यागे च मे निश्चयं मया निश्चितम् अर्थं शृणु आकर्णय। हे पुरुषव्याघ्र! हे पुरुषश्रेष्ठ! हे अर्जुन! त्यागः काम्यकर्मत्यागः सर्वकर्मफलत्यागश्च त्रिविधः सात्त्विकः, राजसः, तामसः इति त्रिप्रकारः संप्रकीर्तितः विद्वद्भिः कथितः ॥ ४ ॥

(मूलगी०) निश्चयं शृणु मे तत्र त्यागे भरतसत्तम। त्यागो हि पुरुषव्याघ्र! त्रिविधः संप्रकीर्तितः ४
यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्। यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ५

(वेदगी०) यज्ञो हि त इन्द्र वर्धनो भूदुत प्रियः सुतसोमो मियेधः। यज्ञेन यज्ञमव यज्ञियः सन् यज्ञस्ते वज्रमहिहत्य आवत ,, ऋ० अष्ट० ३ अध्या० २ व० ११ मं० १२ (मं० ३ सू० ३२ मं० १२)
"मा पृणन्तो दुरितमेन आरन्मा जारिषुः सूरयः सुव्रतासः। अन्यस्तेषां परिधिरस्तु कश्चिदपृणन्तमभिसंयन्तु शोकाः ॥ ऋ० अष्ट० २ अध्या० १ व० १ मं० ८ (मं० १ सू० १२५ मं० ७) यद्वा
दक्षिणावतामिदिमानि चित्रा दक्षिणावतां दिवि सूर्यासः। दक्षिणावन्तो अमृतं भजन्ते दक्षिणावन्तः प्रतिरन्त आयुः ,, ऋ० अष्ट० २ अध्या० १ व० १ मं० ६ मं० १ सू० १२५ मं० ६ यद्वा
तमेव ऋषिं तमु ब्रह्माणमाहुर्यज्ञन्यं सामगामुक्थशासम्। स शुक्रस्य तन्वो वेद तिस्रो यः प्रथमो दक्षिणया रराध ,, ऋ० अष्ट० ८ अध्या० ६ व० ३ मं० ६ ,, मं० १० सू० १०७ मं० ६
"तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिरन्। अवन्त्यस्य पवीतारमाशवो दिवस्पृष्ठमधि तिष्ठन्ति चेतसा ,, ऋ० अष्ट० ७ अध्या० २ व० ८ मं० २ (मं० ९ सू० ८३ मं० २
" त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः। अग्ने दक्षैः पुनीहि नः ,,
ऋ० मं० ९ सू० ६७ मं० २६

१ (यज्ञकर्म)

(वेदगीताभाष्यम्) हे इन्द्र! हे जीवात्मन्! यज्ञः यज्ञकर्म ते तव वर्द्धनः हविःप्रदानेन वर्धयिता हि खलु भूत् भवति। उत अपि च सुत सोमः अभिषु
१ तसोमवान् (मिथोधः) सारभूतोऽयं यज्ञः ते तव प्रियः भवतु। स त्वं यज्ञियः यज्ञार्हः सन् यज्ञं यज्ञस्य कर्तारं जनं यज्ञेन अनुष्ठीयमानेन यज्ञ
कर्मणा अव ~~रक्ष~~ रक्ष। किञ्च अयं यज्ञः ते मुमुक्षोस्तव वज्रम् अहिहत्ये पापहननकर्मणि आवत् = आ अवतु = आ समन्तात् रक्षतु
वर्धनः = वृधु वर्धने इत्यस्य ण्यन्तस्य नंद्यादित्वात् ल्युप्रत्ययः। अव = अवते लोटि रूपम्। सन् असेः शतरि रूपम्। अहिहत्ये = हन हिंसा
गत्योरित्यस्य भावे "हनस्त च" इति क्यप् तकारश्चान्तादेशः। आवत् = अवतेः छान्दसे लङि रूपम् ॥१२॥
कर्म ३ (तपोधर्म:)
३ तप इति = तपोः पापानां तापकस्य तपसः पवित्रं शोधकं च अंगं तेजो वा दिवस्पदे द्युलोकस्य उत्कृष्टे स्थाने वितते विस्तृतम् अस्ति। अस्य
तपसः तन्तवः अंशवः शोचन्तो दीप्यमानाः व्यस्थिरन् विविधं तिष्ठन्ति। अस्य तपसः कर्मणः आशवः शीघ्रगामिनः रक्षाः पवितारं पापवि
तारं यजमानम् अवन्ति रक्षन्ति। ते तपसः रक्षाः दिवः द्युलोकस्य पृष्ठं पृष्ठभागम् उन्नतदेशम् चेतसा बुद्ध्या देवगमने कृत्वा अधि
तिष्ठन्ति आश्रयन्ते ।२॥
चिनः २ (दानकर्म)
२ मा पृणन्त इति = पृणन्तो दातारः सन्तः दुरितं दुष्टं यथा भवति तथा प्राप्तं दुःखम् एनः तत्साधनं पापञ्च मा आरन् न प्राप्नुवन्ति। सूरयः दानमहत्त्व
ज्ञातारः विद्वांसः, तथा सुव्रतासः शोभनकृच्छ्रचान्द्रायणादिनियमवन्तोऽपि नराः मा जारिषुः जरया जीर्णा न भवेयुः = न भवन्ति। तेषां दातॄणां
सूरीणां सुव्रतानां वा अन्यः तेभ्यः भिन्नः यः कोऽपि पुरुषः परिधिः पापस्य परितो धारकोऽस्तु। यद्वा अन्योऽन्यः कश्चन पापदेवः तेषां परि
धिः परिधिस्थानीयो व्यवधायकोऽस्तु। अथ अन्यः यज्ञदानतपःकर्मविशेषो धर्मः तेषां दातृप्रभृतीनां परिधिः परिधानम् अस्तु कवचं स्था
नीयोऽस्तु। यज्ञदानतपःकर्माऽकर्तॄणां किं फलं भवतीत्युच्यते। अपृणन्तं देवादीन् अप्रीणयन्तम् अदातारं शोकाः चित्तपीडाः तत्साधनाः
पाप्मानः अपि अभिसंयन्तु संयन्तु सम्यक् प्राप्नुवन्तु ।७॥ (यद्वा) दक्षिणावतामिति = दक्षिणावतां बहुविधगोहिरण्यादिरूपदक्षि
णाप्रदातॄणाम् इत् एव इमानि भूमौ दृश्यमानानि चित्राणि भिन्नभिन्नप्रकाराणि चायनीयानि स्रक्चंदनमणिमुक्तादिरूपाणि द्रव्या
णि समृद्धानि भवन्ति। दक्षिणावतामेव दिवि द्युलोके सूर्यासः सूर्यसम्बन्धिनो लोकाः तदनुगृहीता भोगा वा समृद्धा भवन्ति।
दक्षिणावन्त एव अमृतं जरामरणरहितं स्थानं भजन्ते सेवन्ते। यद्वा दानेन अपहतपाप्मानः आत्मानं विदित्वा अमृतम् अविनाशं मोक्षं
प्राप्नुवन्ति। "यज्ञेन दानेनेति श्रुतेः" दक्षिणावन्त एव आयुः प्रतिरन्ते अतिदीर्घमायुष्यं लभन्ते प्राप्नुवन्ति। प्रपूर्वस्तिरतिर्वर्धनार्थः इति इति
सर्वत्र संबध्यते।६॥ (यद्वा) तमेवेति = तमेव दक्षिणायाः दातारम् एव ऋषिम् अतीन्द्रियार्थदर्शिनं यद्वा सत्कर्मकरणेन ऋषिमित्याहुः
तथा तमु = तमेव ब्रह्माणम् = ब्राह्मणम् आहुः। किञ्च तमेव यज्ञन्यं यज्ञस्य नेतारम् आहुः। तमेव सामगां साम्नां गातारं तथा
उक्थशासम् शास्त्राणां शंसितारं होतारम् इति ब्रुवन्ति। दक्षिणादानेन सत्कर्मणः परिमृहत् स दाता शुक्रस्य दीप्यमानस्य ज्योति
षः तिस्रः तन्वः अग्निर्वायुरादित्यात्मकानि त्रीणि शरीराणि वेद जानाति। यद्वा शुक्रस्य ब्रह्मणः आध्यात्मिकाधिदैविकाधिभौतिकानि त्रीणि
रूपाणि वेद जानाति। प्रथमो मुख्यो यो जनः दक्षिणया राधि ऋत्विगादीन् आराधयति। यज्ञन्यम् = णीञ् प्रापणे क्विप्। उदात्तस्वरितयोः यण
उक्थशासम् = शंसु स्तुतौ क्विप् अहितादीनां दीर्घः छान्दसः। राधि = राध संसिद्धौ लिटि रूपम्।८॥ त्रिभिरिति = हे देव! शुद्धस्वरूपात्मन्! हे सोम! हे अग्ने! हे ज्योतिः स्वरूप परमात्मन्! त्वं वर्षिष्ठैः सर्वश्रेष्ठैः त्रिभिः यज्ञदानतपःकर्मभिः धामभिः स्वस्थानरूपै ५५१
नः अस्मान् ममक्षुपुरुषान् पुनीहि = पवित्रीकरु ॥२६

एतान्यपीति हे पार्थ! हे अर्जुन! एतानि यज्ञदानतपांसि कर्माणि काम्यकर्माणि सङ्गं त्यक्त्वा सज्यतेऽनेनेति सङ्गः कामः, तं सङ्गं कामं विहाय फलानि च काम्यकर्मजन्यस्वर्गप्राप्त्यादीनि त्यक्त्वा कर्तव्यानि सर्वदा करणीयानीति मे निश्चितं स्थिरीभूतम् उत्तमम् अन्येभ्यः श्रेष्ठं मतं सिद्धान्तमिति ज्ञेयम् ॥६॥ नियतस्येति = नियतस्य श्रुतिस्मृतिप्रोक्तस्य संध्योपासनादेः कर्मणः संन्यासः परित्यागः नोपपद्यते न युज्यते। तस्य यज्ञदानादेः मोहात् अविवेकात् परित्यागः तामसः तमोगुणविशिष्टः परिकीर्तितः विद्वद्भिः कथितः ॥७॥

(मूलगी.) एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥६॥
नियतस्य तु संन्यासः कर्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥७॥

(वेदगी.) . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

दुःखमिति = कायक्लेशभयात् कायस्य देहेन्द्रियादिसंघातस्य क्लेशः भवतीति तस्य क्लेशस्य भयात् यत् कर्म यज्ञादिकं कर्म दुःखं श्रमसाध्यत्वाद् दुःखमिति बुद्ध्वा त्यजेत् विमुञ्चेत्। सः पुरुषः एव राजसं रजोगुणमय्या मनीषया विशिष्टं त्यागं कृत्वा कर्मसंन्यासं कृत्वा त्यागफलं नैव लभेत्। त्यागजन्यं फलं मोक्षं नैवाप्नुयादित्यर्थः। ८ ॥ कार्यमिति = हे अर्जुन! कार्यं परमात्मप्रीत्यै न तु स्वर्गादिप्राप्तये संध्योपासनादिकं कर्तव्यं श्रुतिस्मृतिविधिप्रतिपादितं कर्म संगं कर्तृत्वाऽभिनिवेशयुक्तं चैव तथैव फलं तज्जन्यं फलं त्यक्त्वा नियतं नियमपूर्वकं क्रियते विधीयते। सः त्यागः सात्त्विकः सत्त्वगुणविशिष्टः मतः कथितः ॥ ९ ॥

(मूलगी॰) दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत्। स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥ *कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन। संगं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥

*(वेदगी॰) कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ यजु॰ ४०। २
ऋ॰ मं॰ ११ सू॰ मं॰ ८

अर्थ = कुर्वन्निति = इह = अस्मिन् मनुष्य जन्मनि यद्वा अस्मिन् संसारे मनुष्यः कर्माणि नियतानि श्रौतस्मार्तकर्माणि संगं फलं च त्यक्त्वा कुर्वन् एव शतं समाः शतवर्षायुः पर्यन्तं जिजीविषेत् = जीवितुमिच्छेत्। एवं फलभोगेच्छा रहितत्वेन ~~क~~ कर्म कुर्वति त्वयि कर्मफलेच्छा रहित कर्म कर्तरि मनुष्ये। न लिप्यते = तत् कर्म मनुष्यबंधनहेतुकं न भवति। इतः भिन्नप्रकारः अन्यथा अन्यप्रकारः नास्ति ॥ २ ॥

नेति = त्यागी सात्विकत्यागवान् मुमुक्षुः योगी सत्त्वसमाविष्टः सत्त्वैर्गुणेन समाविष्टः सम्यक् तया मिलितः मेधावी मेधा ब्रह्मज्ञानबुद्धिः साऽस्यास्तीति मेधावी ब्रह्मज्ञानी छिन्नसंशयः छिन्नाः विनष्टाः सर्वे अनात्मबुद्धिप्रतिपादकाः संशयाः यस्य स छिन्नसंशयः सर्वसंशयशून्यः अकुशलम् अशुभं कर्म न द्वेष्टि द्वेषः अप्रीतिः तां न करोति कुशले कुशलसाधने यज्ञदानादिकर्मणि न अनुषज्जते आसक्तो न भवति ॥१०॥ नहीति = देहभृता = देहं बिभर्तीति देहभृत् प्राणी तेन देहभृता देहधारिणा पुरुषेण अशेषतः सर्वाणि नित्यनैमित्तिकादीनि त्यक्तुं संन्यसितुं नहि शक्यम्। यस्तु पुरुषः कर्मफलत्यागी सर्वेषां कर्मणां फलस्य त्यागकर्ताऽस्ति, स त्यागी इति अभिधीयते कथ्यते ॥११॥

(मूलगी.) न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते। त्यागी सत्त्वसमावि[redacted]ष्टो मेधावी
छिन्नसंशयः ॥१०॥ नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः। यस्तु कर्म
फलत्यागी स [redacted] त्यागीत्यभिधीयते ॥११॥

(वेदगी.) अनवद्यै रभिद्युभिर्मखः सहस्वदर्चति।
गणैरिन्द्रस्य काम्यैः ॥ ऋ. मं. १ सू. ६ मं. ८ अष्ट. को. २ सू. ४ मं. २

अर्थ = अनवद्यैरिति = सहस्वत् = निष्काम कर्मा एक बलयुक्तः (मखः) यज्ञाभकः जीवः अभिद्युभिः जगति प्रकाशमानैः प्रसिद्धिंगतैरिति यावत् अनवद्यैः अहंताममता अथवा रागद्वेषादिदोषरहितैः काम्यैः अवश्यं कर्तुं योग्यैः अतः प्रियैः गणैः यज्ञदानतपोभिः इन्द्रस्य इन्द्रं = सर्वैश्वर्यसम्पन्नं परमात्मानं अर्चति = सात्विकभावपूर्वकं सात्विकत्यागेन सेवते ॥२॥

अनिष्टमिति = अत्यागिनां त्यागरहितानां संसारे संसक्तानाम्। अनिष्टम् अनभीष्टम् इष्टम् अभिलषितं मिश्रम् इष्टानिष्टम् इतीत्रिविधं त्रिप्रकारकं कर्मणः फलं ~~प्रेत्य~~ प्रेत्य मरणानन्तरं भवति। संन्यासिनां तु फलत्यागिनां तु क्वचित् न भवति ॥ १२॥
पञ्चेति = हे महाबाहो! महान्तौ बाहू यस्य सः महाबाहुः तत्संबुद्धौ हे महाबाहो! हे महाभुज! हे अर्जुन! अधिष्ठानं सुखदुःखभोगायतनं शरीरम् १ तथा शब्दो चकारवाचकः। कर्ता भोक्ताऽहमित्यभिमानयुक्तः जीवः। पृथग्विधं पृथक् पृथग् विधाः प्रकाराः यस्य तथाभूतं पृथग्विधं बाह्याऽभ्यन्तर भेदेन द्विधाविभक्तं करणं ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि मनो बुद्धिश्चेति। विविधाः नानाप्रकाराः पृथक् भिन्नाः भिन्नाः चेष्टाः प्राणादिचेष्टाविशेषाः। पञ्च पञ्चमं पञ्च संख्यापूरकं दैवं पूर्वजन्मकृतशुभाऽशुभकर्म दैवमित्युच्यते,, एतानि पञ्च पञ्चसंख्याकानि कारणानि सर्वकर्मणां सकलशुभाऽशुभकर्मणां सिद्धये निष्पत्तये सांख्ये सम्यक् ख्यायते निरूप्यते आत्मानात्मतत्त्वम् अनेनेति सांख्यं तस्मिन् सांख्ये ज्ञानप्रधाने वेदान्तशास्त्रे। कृतान्ते = कृतः स्पष्टीकृतः आत्माऽनात्मनोः अन्तः तत्त्वनिर्णयः यत्र तत् कृतान्तम्। यद्वा कृतस्य कर्मणो वैदिकस्य नित्यनैमित्तिकादेः अन्तः समाप्तिः। यत् श्रवणनिमित्तं तत्कृतान्तं तस्मिन् कृतान्ते प्रोक्तानि कथितानि, तानि मे मत्तः निबोध सम्यक्तया जानीहि ॥ १३॥ १४॥

(मूलगी०) अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्। भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् १२
पञ्चैतानि महाबाहो। कारणानि निबोध मे। सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम्। १३॥
अधिष्ठानं तथा कर्ता करणञ्च पृथग्विधम्। विविधाश्च पृथक्चेष्टा दैवं चैवाऽत्र पञ्चमम् ॥ १४॥

(वेदमं०) ×पञ्च पदानि रुपो अन्वरोहं चतुष्पदीमन्वेमि व्रतेन ॥
अक्षरेण प्रति मिम एतामृतस्य नाभावधि सं पुनामि ॥ ४०॥

ऋ० मं३.१० सू० १३ मं० ३ अन्य पाठान्तरेण अथ० कां० १८ सू० ३ मं० ४०

अर्थः = रुपः = संसारे उत्पन्नः जीवात्माऽहं पञ्च पदानि पञ्च स्थानानि अर्थात् शरीरं, कर्ता, करणम्, चेष्टा, दैवम् एतानि पदानि अन्वरोहम्। पुनः व्रतेन = यज्ञादि कर्मणा चतुष्पदीम् अर्थात् कर्तृत्वम् १ करणत्वं २ चेष्टाम्, दैवमिति चतुष्पदीम् अन्वेमि अनुसरामि। पुनः अक्षरेण अर्थात् ब्रह्मोपासनया ओंकारेण एताम् = एतां ~~मुक्तिम्~~ तत्त्वं दृष्टिं प्रति मिमे ~~संयोजयामि~~ संयोजयामि। पुनः ऋतस्य नाभौ परब्रह्मणः मुक्तिधामनि यद्वा सत्यस्य मध्ये यद्वा सांसारिकयज्ञमध्ये (सं पुनामि) स्वात्मानं पवित्रीकरोमि ॥ ४०॥

शरीरेति = नरः पुरुषः शरीरवाङ्मनोभिः शरीरेण वाग्व्यतिरिक्तेन्द्रियजालेन वाचा वागिन्द्रियेण मनसा चित्तेन न्याय्यं न्यायादनपेतं शास्त्रीयं यत्कर्म विपरीतं प्रतिषिद्धं वा यत्कर्म प्रारभते करोति। तस्य शुभस्य अशुभस्य वा कर्मणः एते अधिष्ठानादयः पञ्च हेतवः कारणानि भवन्ति ॥१५॥ तत्रेति = तत्र शुभाऽशुभकर्मकर्तृत्वविषये एवं सति अधिष्ठानादिहेतुपञ्चके सति यः पुरुषः केवलम् एकमात्रम् आत्मानं जीवात्मानं तुशब्दः निश्चयात्मकः कर्तारं तत्तत्कर्मणां कर्तारं पश्यति निरीक्षते। अकृतबुद्धित्वात् कृता धर्माऽधर्मविवेकसंस्कृता बुद्धिः यस्य स कृतबुद्धिः प्रबुद्धात्मतत्त्वः तद्विपरीतः अकृतबुद्धिः आत्मतत्त्वज्ञानशून्यः तस्य भावः अकृतबुद्धित्वं तस्मात् अकृतबुद्धित्वात् दुर्मतिः मन्दबुद्धिः स पुरुषः न पश्यति सम्यक्तया न निरीक्षते ॥१६॥

(मूलगी०) शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः। न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥१५

तत्रैवं सति कर्तारमात्मानं केवलं तु यः। पश्यत्यकृतबुद्धित्वात् न स पश्यति दुर्मतिः ॥१६

(वेदगी०) . . . . . . . . . .

. . . . . . . . . .

यस्येति = यस्य ब्रह्मविदः यतेः अहंकृतः अहमेव करोमि अहमेव भुनज्मि इत्येवंकृतः भावः विचारः न अस्ति। तथा यस्य निरहंकारस्य बुद्धिः कर्मकर्तृत्वप्रतिरूपा बुद्धिः मया इदं शुभम् अशुभं वा कृतमित्येवं भावनती न लिप्यते लिप्ता न भवति। स एवंविधः पुरुषः इमान् लोकान् देवर्षिब्राह्मणादीन् सर्वप्राणिनो हत्वाऽपि स्वहस्तेन सर्वसंहारं कृत्वाऽपि न हन्ति न किञ्चिदपि हिनस्ति न निबध्यते तत्कार्येण फलेन शुभेन अशुभेन वा न संयुज्यते ॥१८॥

(मूलगी.) यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।
हत्वाऽपि स इमाँल्लोकान् न हन्ति न निबध्यते ॥१८॥
(वेदगी.) नकिरस्य शचीनां नियन्ता सूनृतानाम्। नकिर्वक्ता न दादिति ॥१५॥
ऋ. अष्ट. ६ अध्या. ३ व. ४ मं. १५ (मंड. ८ सू. ३२ मं. १५)

नकिरिति = अस्य ब्रह्मविदः यतेः सूनृतानां सूनृतशब्दः शोभनाशोभनकर्मद्वयोपलक्षकः, शोभनानाम् अशोभनानाञ्च शचीनां कर्मणां "धीः शचीति" कर्मनामसु पाठः (निरु.) नियन्ता नियामकः नकिः न कश्चिदस्ति। अहंकृतशून्यत्वात् तत्कर्मफलोपभोक्ता न भवति। "एवं कुरु एवं मा कुरु" इति सर्वत्र समदृष्टेः तस्य ब्रह्मविदः वक्ता उपदेष्टा नकिः न कश्चिदस्ति। नकिः न कश्चित् दात् हननत्वादिकर्मफलप्रदाता न कश्चिदस्तीति ॥१५॥

ज्ञानमिति-ज्ञानम् ईप्सिताऽनीप्सितरूपं द्रव्यगुणादिबोधः। ज्ञेयं द्रव्यगुणादिविषयः, परिज्ञाता ज्ञेयज्ञानयोः प्रमाता, एषा त्रिविधा त्रिप्रकारा कर्मचोदना कर्मणः चोदना चोद्यते प्रवर्त्यतेऽनया इति चोदना प्रवर्तनाऽस्ति। करणं क्रियतेऽनेन करणं बाह्याऽभ्यन्तररूपं वागादीन्द्रियबुद्ध्यादिसाधनम्। कर्म ईप्सिततमं क्रियाविषयभूतं यज्ञादिकं कर्म। कर्ता स्वतंत्रः कर्ता विज्ञानात्मा, इति कर्मसंग्रहः सम्यग् गृह्यतेऽस्मिन्निति संग्रहः, कर्मणां संग्रहः कर्मसंग्रहः त्रिविधः त्रिप्रकारकः अस्ति ॥१८॥

(मूलगी·) ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥१८॥

(वेदगी·) त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः।
अग्ने दक्षैः पुनीहि नः ॥२६॥ ऋ·मं· ९ सू· ६७ मं· २६

त्रिभिरिति। हे देव! हे दीप्यमानपरमात्मन्! हे सवितः! हे जगदुत्पादकपरमेश्वर! यद्वा सर्वेषां प्राण्यप्राणिनां स्वे स्वे कर्मणि चोदयतः! हे सोम! हे पवमानगुणविशिष्ट! हे अग्ने! हे ज्योतिःस्वरूप! त्वं वर्षिष्ठैः सर्वश्रेष्ठैः दक्षैः सामर्थ्यवद्भिः त्रिभिः ज्ञानज्ञेयत्वपरिज्ञातृत्वैः त्रिप्रकारकैः धामभिः कर्मचोदनस्वरूपैः शरीरैः नः अस्मान् पुरुषान् पुनीहि परिशुद्धान् कुरु ॥२६॥

ज्ञानमिति = गुणसंख्याने गुणाः सत्त्वरजस्तमांसि संख्याने सम्यक् ख्यायन्ते प्रतिपाद्यन्ते यत्र तद्गुणसंख्यानं कापिलं सांख्यशास्त्रं तस्मिन् ज्ञानं पदार्थबोधः, कर्म श्रौतस्मार्तादिकं कर्म। कर्ता कर्मकर्ता, एतत् त्रितयं गुणभेदतः सत्त्वरजस्तमोगुणभेदात् त्रिधा एव त्रिप्रकारा एव प्रोच्यते कथ्यते। तानि अपि यथावत् यथार्थतया शृणु आकर्णय ॥१९॥

(मूलगीता) ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥१९॥

(वेदगी.) त्री रोचना वरुण त्रीन उत द्यून त्रीणि मित्र धारयथः।
रजांसि वद्धानो अमतिं क्षत्रियस्य अनुव्रतं रक्षमाणो अजुर्यम् ॥
मं३ सू२७ मं.९
ऋ.५।५।६९।१ तिस्रः वाचः ईरयति प्र वह्निर् ऋतस्य धीतिं ब्रह्मणो मनीषाम्। गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥ ऋ-मं.९ सू.९७ मं.३४

शरीरधारक प्रष्टा "त्रीणि छन्दांसि कवयो वियेतिरे पुरुरूपं दर्शतं विश्वचक्षणम्। आपो वाता ओषधयस्तान्येकस्मिन् भुवन अर्पितानि" अथ.१८।१।१७

वह्निः आत्मा तिस्रः ~~त्रिप्रकाराः~~ त्रिसंख्याकाः वाचः विद्यां, मतिं, बुद्धिं ~~कर्तृत्वं~~ प्र+ईरयति प्रेरयति। ऋतस्य आत्मनः धीतिं ब्रह्मणः ~~वैदिकनीतिम~~ वेदस्य मनीषां त्रिविधं ज्ञानकर्मकर्तृत्वं प्रेरयति। गावः इन्द्रियाणि गोपतिम् इन्द्रियस्वामिनम् ~~आत्मानं~~ मनः पृच्छमानाः यन्ति संसारयात्रां कुर्वन्ति। मतयः कर्माणि, बुद्धयः ज्ञानानि च ~~सः~~ वावशानाः कामयमानाः सोमम् आत्मानं यन्ति प्राप्नुवन्ति ॥ यद्वा

कवीतिः = कवयः ज्ञानिनः (आपः = सर्वत्र व्यापकपरमात्मनः बोधकं ज्ञानमितिभावः, वाताः = पावकाः सदागतयः कर्मेतिभावः। ओषधयः ओषधिद्वारा नीरोगतां दधानः अर्थात् कर्ता, एतानि त्रीणि त्रिसंख्याकानि छन्दांसि समग्रसंसारे उपलभन्ते संसारनिर्वाहाय वि+येतिरे = विविधयत्नैः रक्षितानि (पुरुरूपम् = प्रत्येकमर्थात् ज्ञानं, कर्म, कर्ता च प्रत्येकं बहुरूपवत् प्रत्येक दर्शतम् अद्भुतम् विश्वचक्षणम् प्रत्येकं सर्वैः दर्शनीयम्। तानि त्रीणि एकस्मिन् भुवने केवलं संसारे एव अर्पितानि स्थापितानि ॥

सर्वभूतेष्विति = यः पुरुषः सर्वभूतेषु सर्वेषु अव्यक्तादारभ्य स्थूलपर्यन्तेषु भूतेषु स्थावरेषु जंगमेषु च येन ज्ञानेन एकमविलक्षणम् अव्ययं विकाररहितं ज्ञानं प्रत्यगात्मस्वरूपम् ईक्षते पश्यति। तत् ज्ञानं सात्विकं सत्वगुणविशिष्टं विद्धि जानीहि ॥२०॥

* विभक्तेषु विभागं प्राप्तेषु अपि पदार्थेषु अविभक्तं विभागरहितं

(मूलगी०) सर्वभूतेषु येनैकं भावमव्ययमीक्षते।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकम् ॥२०॥

(वेदगी०) यस्मान्न ऋते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते।
यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत् स जनास इन्द्रः ॥१॥
ऋ० अष्ट० २ अध्या० ६ व० ८ मं० १ (मंड० २ सू० १२ मं० ९) अथर्व० २० कां० ३४ सू० ९ मं०

सात्विकज्ञान रहिताः ज्ञानस्य सत्वगुणस्य "यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन। स धीनां योगमिन्वति," ऋ० मंड० १ सू० १८ मं० ७

यस्मादिति = जनासः जनाः सात्विकाः पुरुषाः यस्मात् ऋते सत्वगुणात् विना न विजयन्ते विजयं मुक्तिं न प्राप्नुवन्ति। अतः युध्यमानाः विरुद्धवृत्तिभिः इन्द्रियैः सह रजस्तमोभ्यां गुणाभ्यां सह वा सत्वगुणलब्धये युद्धं कुर्वाणाः अवसे रक्षणाय यं हवन्ते सत्वगुणं प्रत्यगात्मस्वरूपवृत्तिं वा आह्वयन्ति ध्यायन्ते। यः सत्वगुणः प्रत्यगात्मा वा विश्वस्य सर्वस्य जगतः प्रतिमानं प्रतिनिधिः प्रतिस्वरूपं वा बभूव भवति। यो अच्युतच्युत् अच्युतान् स्थिरवृत्तीनामपि च्यावयिता असि हे जनासः हे जनाः स इन्द्रः परमैश्वर्यवान् सत्वगुणविशिष्टः [redacted] जनः अस्ति ॥ २०॥

यद्वा सात्विकज्ञानात ऋते
यस्मादिति = यस्मात् सत्वगुणात् ऋते विना विपश्चितश्चन = बुद्धिमतः पुरुषस्य अपि (यज्ञः = यज्ञप्राप्तिः विष्णुपलब्धिः न सिध्यति रजोगुणे तमोगुणे च सिद्धिं न प्राप्नोति सः सात्विकः पुरुषः धीनां सात्विकबुद्धीनां योगं संयोगम् इन्वति प्राप्नोति ॥८॥ यथा च महानारायणोपनिषद् श्रु० २ यथा शुद्धसुवर्ण[redacted]स्य कटकमुकुटांगदभेदाः। यथा समुद्र सलिलस्य स्थूलसूक्ष्मतरंगफेनबुद्बुदकरकलवणपाषाणादनन्तभेदाः। यथा भूमेः पर्वतवृक्षतृणगुल्मलताद्यनन्तः बहुभेदः। तथैवाद्वैतपरमानन्दलक्षणपरब्रह्मणो मम सर्वाद्वैतमुपपन्नं भवत्येव ॥"

पृथक्त्वेनेति: नानाविधवासनया मिलितः यः पुरुषः सर्वेषु भूतेषु देवर्षिमनुष्यपशुसरीसृपादिदेहेषु यत् ज्ञानं पृथक्त्वेन प्रतिदेहं भिन्नत्वेन पृथग्विधान् सुखदुःखादिभिः मिथो विलक्षणान् नानाभावान् अनेकान् जीवान् वेत्ति जानाति। तत् ज्ञानं राजसं रजोगुणविशिष्टं विद्धि जानीहि ॥२१
यत्त्विति: एकस्मिन् कार्ये भूतकार्ये कृत्स्नवत् परिपूर्णवत् सक्तम् आत्मा परमात्मा च स्वस्वरूपेणैव एतावानिति निश्चययुक्तम् अहैतुकम् हेतुः युक्तिः तद्रहितं युक्तिशून्यमित्यर्थः। अल्पं निकृष्टम् अतत्त्वार्थवत् मिथ्याविषयभूतं यत् ज्ञानमस्ति। तत् ज्ञानं तामसं तमोगुणविशिष्टम् उदाहृतं कथितमिति ॥ २२॥

(मूलगी.) पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान्। वेत्ति सर्वेषु भूतेषु
तज्ज्ञानं विद्धि राजसम् ॥२१॥ यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्त
महेतुकम्। अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥२२॥

नियतमिति= नियतं श्रुतिस्मृतिप्रतिपादितमावश्यकं संगरहितं कामनारहितम् अरागद्वेषतः रागश्च द्वेषश्च रागद्वेषौ, न स्तः रागद्वेषौ यस्य स अरागद्वेषः तेन अरागद्वेषेण "तृतीयार्थे तसिः" अफलप्रेप्सुना फलाकांक्षारहितेन यत् कर्म कृतमस्ति। तत् कर्म सात्त्विकं सत्त्वविशिष्टं कर्म उच्यते कथ्यते ॥२३॥ यत्त्विति= कामेप्सुना काम्यते इति कामः कर्मफलं तं कामम् आप्तुम् इच्छता कामेप्सुना तु पुनः अपि साहंकारेण अहमिदं करोमीत्यभिमानयुक्तेन बहुलायासं बहुलः महान् आयासः परिश्रमः यस्मिन् कर्मणि तत् बहुलायासं यत् कर्म क्रियते विधीयते तत् कर्म राजसं रजोगुणविशिष्टम् उदाहृतं कथितमस्ति ॥२४॥ अनुबन्धमिति= अनुबन्धं भविष्यत्काले भावि अनर्थं फलम्, क्षयं क्रियमाणे कर्मणि धनक्षयं बलक्षयं पुण्यादिक्षयं वा, हिंसां प्राणिनाशं पौरुषञ्च स्वसामर्थ्यञ्च अनवेक्ष्य अविचार्य यत् कर्म मोहात् अविवेकात् आरभ्यते तत् कर्म तामसं तमोगुणविशिष्टम् उच्यते कथ्यते ॥२५॥

(मूलगी.) नियतं संगरहितमरागद्वेषतः कृतम्। अफलप्रेप्सुना कर्म यत्तत्सात्विकमुच्यते ॥२३॥
यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः। क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥२४॥
अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम्। मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥२५॥

(वेदगी.) . . . . . . . . . . . . . . . . . . .

. . . . . . . . . . . . . . . . . .

मुक्तेति=मुक्तसंगः मुक्तः परित्यक्तः संगः फलकामना येन स मुक्तसंगः निष्कामः। अनहंवादी अहमेव करोमीतिवदनशीलः यः न भवति सः अनहंवादी धृत्युत्साहसमन्वितः अर्थप्रयादौ धृतिः धैर्यम् उत्साहः चिकीर्षा, वेगः ताभ्यां समन्वितः सम्यक्तया युक्तः सिद्ध्यसिद्ध्योः स्वकार्यसिद्धौ स्वकार्याऽसिद्धौ वा निर्विकारः निर्गतौ हर्षविषादौ यस्मात् स निर्विकारः हर्षविषादरहितः कर्ता कर्मणः कर्ता सात्विकः सत्वगुणविशिष्टः उच्यते कथ्यते ॥२६॥ रागीति=रागी कर्मफलेषु रागः कामः विषयोपभोगेच्छाऽस्यास्तीति कर्मफलप्रेप्सुः कर्मणः फले पुत्रधनादिके प्रेप्सुः प्राप्तुमिच्छुः लुब्धः दानादौ धनत्यागाऽसहिष्णुः लुब्धः यद्वा परधनाऽभिलाषुकः लुब्धः हिंसात्मकः परहितघातकः अशुचिः शास्त्रप्रतिपादितशौचरहितः, हर्षशोकान्वितः हर्षश्च शोकश्च हर्षशोकौ ताभ्याम् अन्वितः मिलितः कार्यसिद्धौ हर्षान्वितः कार्याऽसिद्धौ शोकान्वितः इतिभावः कर्ता कर्मणः कर्ता योऽस्ति। सः राजसः रजोगुणविशिष्टः परिकीर्तितः विद्वद्भिः कथितः ॥२७॥ अयुक्त इति=अयुक्तः विषयासक्तत्वात् सकलशुभकर्मकर्तृत्वाऽयोग्यः। प्राकृतः शास्त्रसंस्कारैः शून्यः कार्याकार्यविवेकरहितः। स्तब्धः अनम्रः। नैष्कृतिकः परवञ्चकः। अलसः अवश्यकर्तव्यकार्येष्वपि प्रवृत्तिशून्यः उद्यमरहितः इत्यर्थः। विषादी क्लिष्टचित्तः, दीर्घसूत्री सद्यः कर्तव्ये कर्मणि अपि चिरकर्ता, ईदृशः कर्मणः कर्ता यः पुरुषः अस्ति स कर्ता तामसः तमोगुणविशिष्टः इत्युच्यते इति कथ्यते ॥२८॥

(मूलगी.) मुक्तसंगोऽनहंवादी धृत्युत्साहसमन्वितः। सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्विक उच्यते॥२६॥
रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः। हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः॥२७॥
(वेदगी.) ×अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः। विषादी दीर्घसूत्री च कर्ता तामस उच्यते॥२८॥

वेदगीता ✱ परोऽपेहि मनस्पाप किमशस्तानि शंससि। परेहि न त्वा कामये वृक्षाँ वनानि संचर गृहेषु गोषु मे मनः॥
अथ. कां. ६।४५।१ म.

अर्थ=हे मनस्पाप! हे मनसः पाप! अर्थात् पापात्मक विचार! (परः) दूरे (अपेहि) गच्छ (अशस्तानि) अनिष्ट विचारान् (किम्) कुतः (शंससि) कथयसि उपदिशसीति वा। (परा) दूरं (इहि) त्वं याहि (त्वा) त्वां दुष्टविचारं (न कामये) नाभिलषामि (वृक्षान्) वृक्षेषु (वनानि) वनेषु च (संचर) विचरणं कुरु यतः (मे) मम (मनः) मनः (गृहेषु) गृहकार्येषु (गोषु) गोकर्मसु च विद्यते॥१
अर्थात् दुष्कृतैः तामसविचाराः सर्वदा परिहेया एव। तामसकृत्यं देहगेहं कर्जीकरोते। तद्दूरीकरणीयमिति भाव:॥

बुद्धेरिति = हे धनञ्जय! हे अर्जुन! बुद्धेः अन्तःकरणवृत्तिविशेषस्य भेदं प्रकारं चैव तथा धृतेः धैर्यस्य भेदम् अशेषेण कार्त्स्न्येन पृथक्त्वेन वि-
भागेन तथा प्रोच्यमानं मया प्रकर्षेण कथ्यमानं गुणतः सत्त्वादिगुणभेदतः त्रिविधं त्रिप्रकारकं शृणु आकर्णय। २९॥ प्रवृत्तिमिति = हे अर्जुन हे पार्थ!
या बुद्धिः प्रवृत्तिं विषयेषु प्रवृत्तिम् निवृत्तिं विषयेभ्यः निवृत्तिं कार्याकार्ये कर्तव्यकार्यम् अकर्तव्यकार्यम्। भयाभये भयम् अनर्थकारणम् अभयं
कल्याणकारणं बन्धं संसारबन्धनं मोक्षं संसारविमुक्तिं वेत्ति जानाति। सा बुद्धिः सात्त्विकी सत्त्वगुणविशिष्टा भवति ॥३०॥

(मूलगी.) बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु। प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय २९
प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये। बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ ~~सात्त्वि~~ ३०
सात्त्विकी

(वेदगी.) याममर्वा मनुष्पिता दध्यङ् धियमत्नत।
तस्मिन् ब्रह्माणि पूर्वथेन्द्र उक्था समग्मतार्चन्ननु स्वराज्यम् ॥१६॥
ऋ. अष्ट. १ अध्या. ५ व. ३१ मं १६ यद्वा "सा चित्तिभिर्नि भद्रा सुमती यशस्वत्युषा उवास मनवे स्वर्वती।
यदीमुशन्तमुशतामनु क्रतुमग्निं होतारं विदथाय जीजनन् ॥२॥
अथ. १८।१।१२० ऋ. मं ३ सू. ११ मं. २
ऋ. मं ३१ सू. ८० मं. १६

यामिति = अथर्वा हिंसारहितः पुरुषः मनुः शास्त्रप्रतिपादितवाक्यमननशीलः, पिता इन्द्रियप्रवृत्तिनिवृत्तिनियमपरिपालयिता द-
ध्यङ् बन्धमोक्षनियमधारकः जनः यां सात्त्विकीं धियं बुद्धिम् अत्नत अतन्वत तनोति लकारव्यत्ययः। तस्मिन् सात्त्विककर्मणि सात्त्विकबुद्धिम्
सति ब्रह्माणि ब्रह्मप्रतिपादकानि उक्था उक्थानि स्तोत्राणि ~~इन्द्रे सर्वैश्वर्यसम्पन्ने परमात्मनि~~ पूर्वथा पूर्ववत् अग्मत सम्यग् ध्नन्ति ति बुद्धे = जीवात्मनि
सम्यक् तथा गच्छन्ति। सात्त्विकबुद्धिधारणात् जीवः स्वराज्यं स्वस्य राज्यत्वं मोक्षम् अनर्चन् प्रकाशयन् वर्तते ॥ अत्नत = तनु विस्तारे "बहुलं
छन्दसि" इति विकरणस्य लुक्। "तनिपत्योश्छन्दसि" इत्युपधालोपः। पूर्वथा = प्रत्नपूर्वविश्व — "छन्दसि" इतीवार्थे पूर्वशब्दात् थाल्प्रत्ययः।
उक्था = शेश्छन्दसि बहुलम्" इति शेर्लोपः। समग्मत = समो गम्यृच्छिभ्यामित्यात्मनेपदम्। "लुङि मन्त्रे घस —" च्लेर्लुक् "गमहन —" इ-
त्युपधालोपः। स्वराज्यम् = राज्ञः भावः कर्म वा राज्यम् "पत्यन्तपुरोहितादिभ्यो यक्" इति यक् ॥१६॥
सा चित्तिरिति = हे जीवात्मन्! (सा) प्रवृत्तिनिवृत्त्योः, कार्याकार्ययोः, भयाभययोः, बन्धमोक्षयोः उपदेष्ट्री वेदज्ञानोत्पन्ना सात्त्विकी बुद्धिः (उ = एव
चित्तिभिः + नि = निश्चयेन भद्रा मनुष्यकल्याणकर्त्री सुमती मैत्री परिष्कृतज्ञानवती यशस्वती वीर्यवती तथा कीर्तिमती उषा सर्वप्राणिवशकर्त्री
वा उषा इव सर्वेषां पदार्थानां गुणदोषौ आविष्कुर्वती स्वर्वती स्वर्गमयसुखवती मनवे मनुष्याय उवास संसारे निवासं करोति।
यत् यतः उशतां संसारे बहुविकामानां कामयमानानां मध्ये उशन्तम् वेदज्ञानस्य प्राप्तिमभिलषन्तम् क्रतुम् वेदाऽऽज्ञाऽनुक-
र्तारं निष्कामकर्मकर्तारं होतारं परमात्मपूजकम् अग्निम् ज्ञानाग्निना प्रकाशमानं जीवात्मानं (विदथाय) ज्ञानोपदेशं दातुम्
जीजनन् प्रकटितवती ॥ ५६४

x द्वारा सात्त्विकी बुद्धिः

ययेति= हे पार्थ! हे अर्जुन! यया बुद्ध्या धर्मं शास्त्रविहितं जगदुद्धारकं धर्मम् अधर्मम् शास्त्रप्रतिषिद्धं जीवाधोगतिकारकम् अधर्मम् कार्यं देश
कालाऽनुसारि कर्तव्यं कर्म; अकार्यम् अकर्तव्यं कर्म अयथावत् यथार्थतारहितेन यः जीवः प्रजानाति सा राजसी रजोगुणविशिष्टा बुद्धिः
अस्ति ॥३१॥ अधर्ममिति= हे पार्थ! हे अर्जुन! या बुद्धिः अधर्मं चौर्यादिकं यद्वा देहं धर्मं मन्यते जानाति। सर्वार्थान् सर्वविषयान् विपरीतान्
प्रतिकूलान् मन्यते जानाति। तमसा अज्ञानमूलकेन तमोगुणेन आवृता आच्छादिता सा तामसी तमोगुणविशिष्टा बुद्धिः अस्ति ॥३२॥

(मूलगी.) यया धर्ममधर्मञ्च कार्यं चाऽकार्यमेव च।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥३१॥
अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ! तामसी ॥३२॥
(वेदगी.) . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . .

हे पार्थ! हे अर्जुन! पुरुषः यः पुरुषः योगेन चित्तवृत्तिनिरोधेन अव्यभिचारिण्या संततभाविन्या अविनाभूतया इत्यर्थः। यया धृत्या मनःप्राणेन्द्रियक्रियाः
मनश्च प्राणाश्च इन्द्रियाणि च तानि मनःप्राणेन्द्रियाणि तेषां क्रियाः चेष्टाः प्रवृत्तिरूपाः सर्वाः क्रियाः धारयते स्वायत्तीकुरुते सा सात्विकी
सत्वगुणविशिष्टा धृतिः अस्ति ॥३३॥ ययेति = हे अर्जुन! प्रसंगेन धर्मादिप्रसक्ता फलाकांक्षी धर्मादिफलाऽभिलाषुकः यः पुरुषः यया
धृत्या धर्मकामार्थान् धर्मश्च अर्थश्च कामश्च ते धर्मकामार्थाः तान् धर्मकामार्थान् धारयते सा राजसी रजोगुणविशिष्टा धृतिः अस्ति, ३४
ययेति = हे पार्थ! हे अर्जुन! यः दुर्मेधा दुष्टा मेधा बुद्धिर्यस्य स दुर्मेधाः दुर्मतः पुरुषः यया धृत्या स्वप्नं निद्रां भयं भीतिं शोकं संतापम्
विषादं वैकल्यं मदमेव विषयमदोन्मादं च न विमुञ्चति न परिहरति। सा तामसी तमोगुणविशिष्टा धृतिः अस्ति ॥३५॥

(मूलगी·) धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः। योगेनाऽव्यभिचारिण्या
धृतिः सा पार्थ सात्विकी ॥३३॥ यया तु धर्मकामार्थान् धृत्या धारयतेऽ
र्जुन! प्रसंगेन फलाकांक्षी धृतिः सा पार्थ राजसी ॥३४॥ यया स्वप्नं भयं
शोकं विषादं मदमेव च। न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥३५॥
(वेदगी·) . . . . . . . . . . . . . . . . . . . . .

सुखमिति= हे भरतर्षभ! हे भरतकुलश्रेष्ठ! हे अर्जुन! इदानीं सम्प्रति सुखं त्रिविधं सात्विकं राजसं तामसमिति त्रिप्रकारकं शृणु आकर्णय। यत्र यस्मिन् सुखे
अभ्यासात् यमनियमाद्यभ्यासात् जनः रमते रमणं कुरुते। दुःखान्तञ्च दुःखस्य अन्तं नाशञ्च निगच्छति प्राप्नोति॥३६॥ यदिति= यत् सुखम्
अग्रे प्रारम्भकाले विषमिव विषसदृशं दुःखमयं प्रतीयते। परिणामे ज्ञानपरिपक्वाऽवस्थायां तत् सुखम् अमृतोपमम् अमृतसदृशम्
सुखकरं प्रतीयते। तत्सुखम् आत्मबुद्धिप्रसादजम् आत्मवैषयिकी या बुद्धिः ज्ञानं तस्य यः प्रसादः प्रसत्तिः तस्मात् प्रसादात् जायते
उत्पद्यते इत्यात्मबुद्धिप्रसादजं सुखं सात्विकं सत्वगुणविशिष्टं भवति॥३७॥ विषयेति= यत् सुखम् अग्रे पूर्वं विषयेन्द्रियसंयोगात्
विषयाः पदार्थाः इन्द्रियाणि चक्षुरादीनि तयोः यः संयोगः संसर्गः तस्मात्। अमृतोपमम् अमृतसदृशं प्रतीयते। परिणामे परिपक्वाऽ
वस्थायां विषमिव विषसदृशं दुःखकरं भवेत् तत्सुखं राजसं रजोगुणविशिष्टं स्मृतं कथितमस्ति॥३८॥ यदिति= यत् सुखम् अग्रे
प्रारम्भकाले अनुबन्धे च परिणामे च आत्मनः सदसद्विवेकहेतोः विचारशक्तेः मनसो वा मोहकारकं निद्रालस्यप्रमादोत्थं निद्रा स्वापः, आलस्यं
कर्मस्वप्रवृत्तिः [illegible] प्रमादः उन्मत्तता एभ्यः उत्थम् समुत्पन्नं सुखमस्ति। तत् सुखं तामसं तमोगुणविशिष्टमस्ति॥३९॥
(मूलगी)

(मूलगी) सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ। अभ्यासाद्रमते यत्र दुःखान्तञ्च निगच्छति॥३६॥
यत्तदग्रे विषमिव परिणामेऽमृतोपमम्। तत्सुखं सात्विकं प्रोक्तमात्मबुद्धिप्रसादजम्॥३७॥
विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम्। परिणामे विषमिव तत्सुखं राजसं स्मृतम्॥३८॥
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः। निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम्॥३९॥
(वेदगी) . . . . . . . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . .
.

शम इति = शमः अन्तःकरणशान्तिः, दमः चक्षुरादीन्द्रियनिग्रहः, तपः ब्रह्मचर्यादितपश्चरणम्, शौचं बाह्याभ्यन्तरशुद्धिः, क्षान्तिः शक्तौ सत्यामपि सहनशीलता, आर्जवं सारल्यम्, ज्ञानं सद्सद्वस्तुविवेकः, विज्ञानम् ईश्वरसाक्षात्काराऽवबोधः, आस्तिक्यं वेदशास्त्रे श्रद्धा एतदेव स्वभावजं स्वाभाविकं सत्वगुणात्मकं ब्रह्मकर्म ब्राह्मणस्य कर्म अस्तीति ॥४२॥

(मूलगी०) शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥४२॥

(वेदगी०) हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संयजन्ते सखायः।
अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो विचरन्त्यु त्वे, ऋ० मं० १० सू० ७१ मं० ८ यद्वा निरु० १३।१३
"शम्भो वः शम्भः क्रुध्मी मनांसि धुनिर्मुनिरिव शर्धस्य धृष्णोः" ऋ० मं० ७ सू० ५६ मं० ८

हृदेति = यद् = यदा ब्राह्मणाः ब्राह्मणवर्णाः हृदा चित्तेन तष्टेषु सूक्ष्मीकृतेषु मनसः अन्तःकरणस्य जवेषु विचारेषु सखायः मिलिताः सन्तः संयजन्ते सम्यक्तया यजनं कुर्वन्ति। अत्र ब्राह्मणसमुदाये वेद्याभिः ज्ञातव्याभिः प्रवृत्तिभिः त्वम् एकेम् अशर्मम् अदमम् अतपः अशौचम् अक्षान्तिम् अनार्जवम्। अज्ञानं नास्तिकत्वम् मनुजः परित्यजन्ति। त्वे अपरे ओहब्रह्माणः आसमन्तात् ऊहेन तर्केण वेदज्ञातारः श्रुत्या मत्या बुद्ध्या च विचरन्ति। प्रयान्ति। ८ ॥ यद्वा हृदेति२

शौर्यमिति= शौर्यं शूरस्य भावः शौर्यं पराक्रमः, तेजः प्रागल्भ्यं, धृतिः विपत्तौ सत्यामपि मनसः विकलतारहित्यम्। दाक्ष्यम् दक्षस्य भावः दाक्ष्यं शतशः विघ्नेषु सत्स्वपि स्वकार्यसम्पादनसामर्थ्यम्। युद्धे च संग्रामे च अपलायनम् युद्धे प्राणसंकटे प्राप्तेऽपि युद्धादपलायनम्। दानम्= पात्रेभ्यः द्रव्यादर्पणम्। ईश्वरभावः ऐश्वर्यं सर्वनियामकत्वं धर्मपूर्वकं प्रजापालनमित्यर्थः। एतत्सर्वं कर्म स्वभावजं स्वभावात् जातम् क्षात्रं क्षत्रियजात्यर्हं कर्तव्यं शास्त्रप्रतिपादितमस्ति ॥ ४३ ॥

(मूलगी०) शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाऽप्यपलायनम्। दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥४३॥

(वेदगी०) शूरग्रामः सर्ववीरः सहावान् जेता पवस्व सनिता धनानि। तिग्मायुधः क्षिप्रधन्वा समत्स्वषाढः साह्वान् पृतनासु शत्रून् ॥, साम० ३ उत्त० अध्या० १२ मं० १ ऋ० अष्ट० ७ अध्या० ३ व० २६ मं० २

यद्वा "युध्मो अनर्वा खजकृत् समद्वा शूरः सत्राषाड् जनुषेमषाळ्हः। व्यास इन्द्रः पृतनाः स्वोजा अधा विश्वं शत्रूयन्तं जघान ॥ २ ॥" ऋ० अष्ट० ५ अध्या० ३ व० १ मं० १ (मं० ७ सू० २० मं० ३) यद्वा त्वमग्ने यातुधा

नानुपबद्धाँ इहावह। अथैषामिन्द्रो वज्रेणापि शीर्षाणि वृश्चतु ॥ अथ० का० १ सू० ७ मं० ७

शूरग्राम इति= हे क्षत्रिय! शूरग्रामः शूराणां वीराणां ग्रामः संघो यस्य सः शूरग्रामः, सर्ववीरः सर्वे वीराः सहायकाः यस्य स सर्ववीरः सहावान् सहनवान् क्षमाशीलः, जेता शत्रुजयशीलः पलायनविरहितः। धनानि सनिता= धनप्रदाता दानशीलः। तिग्मायुधः तीक्ष्णप्रहरणसाधनः। क्षिप्रधन्वा क्षिप्रसहनशीलधन्वा। समत्सु संग्रामेषु अषाढः असोढः संग्रामकर्ता इत्यर्थः। पृतनासु शत्रुसेनासु शत्रून् रिपून् साह्वान् अभिभवन् त्वं क्षत्रियजातिजः त्वं पवस्व क्षत्रियधर्मपालनेन आत्मानं पवित्रीकुरु। २ ॥ (यद्वा) युध्मो योद्धा, अनर्वा अभिगन्तृरहितः युद्धेषु अपराङ्मुखो वा। खजकृत्= युद्धकृत् "खले खजे इति युद्धनामसु पाठः"। समद्वा समत् कलहः तद्वान्। शूरः शौर्योपेतः। जनुषा जन्मना स्वभावत एव सत्राषाट् बहूनाम् अभिभविता। अषाळ्हः स्वयञ्च केनाऽप्यनभिभूतः स्वोजाः सुबलः ईम् अयम् इन्द्रः ऐश्वर्यवान् क्षत्रियः पृतनाः शत्रूणां सेनाः व्यास विक्षिपति अधा अपि च शत्रूयन्तं शत्रुत्वम् आचरन्तं विश्वं सर्वं जघान= हन्ति लकारव्यत्ययः॥ ३ ॥

इतस्ततः प्रधावयति त्वमिति= हे अग्ने! हे अग्निस्वरूपजीवात्मन्! क्षत्रिय! त्वं यातुधानान् परपीडकान् शत्रून् उपबद्धान् पूर्णरूपेण बद्ध्वा इह भारदण्डनीयजनाकुले कारागारे वह धारय। अथ पुनः इन्द्रः ऐश्वर्यवान् क्षत्रियराजः एषां ~~शत्रून्~~ मनुष्यघातकशत्रूणां शीर्षाणि शिरांसि वज्रेण कठिनास्त्रेण वृश्चतु छिनत्तु ॥

अदादित्वात् शपो लुक् । धनदाः = ददातेः "आतो मनिन्" इति विच् प्रत्ययः ॥ १ ॥

~~अदादित्वात् शपो लुक् । धनदाः = ददातेः "आतो मनिन्" इति विच् प्रत्ययः ॥ १ ॥~~

स्वे इति = नरः ब्राह्मणो वा क्षत्रियो वा वैश्यो वा शूद्रो वा पुरुषः स्वे स्वे शमशौर्यकृषिपरिचर्यात्मके स्वकीये स्वकीये कर्मणि शमशौर्यादौ अभि
रतः नियमेन यथाविधि संलग्नः पुरुषः यथा येन प्रकारेण सिद्धिं सत्त्वशुद्धिं विन्दति लभते। तद्विधं शृणु आकर्णय ॥४५॥

(मूलगी॰) स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥४५॥

(वेदगी॰) . . . . . . . . . . . . . .
. . . . . . . . . . . . . .

यत इति= यतः यस्मात् परब्रह्मणः "जन्माद्यस्य यतः" "यतो वा इमानि भूतानि जायन्ते" भूतानां पृथिव्यादिभूतानां जीवानां वा प्रवृत्तिः उत्पत्तिः जन्म वा अस्ति। येन परब्रह्मणा इदं दृश्यमानं सर्वं जगत् ततम् व्याप्तम्। मानवः ब्राह्मणो क्षत्रियो वा वैश्यो वा शूद्रो वा पुरुषः स्वकर्मणा श्रौ तस्मार्तेन शमादि स्वस्वसात्विककर्मणा तं परमात्मानम् अभ्यर्च्य संपूज्य सिद्धिं स्वमुक्तिफलं विन्दति प्राप्नोति ॥४६॥

(मूलगी.) यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥४६॥

(वेदगी.) सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः। जनिताग्ने र्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥५॥ "साम. उत्तरा. ३।१ पू. ६।१ (अध्या. ५ खं. ९) यद्वा "यो विश्वस्य जगतः प्राणतस्पतिर्यो ब्रह्मणे प्रथमो गा अविन्दत। इन्द्रो यो दस्यूँरधराँ अवातिरन्मरुत्वन्तं सख्याय हवामहे। ऋ. अष्ट. १ अध्या. ७ व. १२ मं. ५ (मं. १ सू. १०१ मं. ५)

सोम इति= मतीनां सर्वप्राणिबुद्धीनां जनिता जनयिता उत्पादकः, दिवः द्युलोकस्य जनिता प्रादुर्भावयिता, पृथिव्याः भूमेः जनिता उत्पादकः। अग्नेः अनलस्य जनिता प्रकाशयिता, सूर्यस्य आदित्यस्य जनिता उत्पादकः, इन्द्रस्य सर्वैश्वर्यसम्पन्नस्य प्राणिनः आत्मनः वा जनिता उत्पादयिता, उत= अपि विष्णोः सर्वत्र व्यापनशीलस्य सत्वादिगुणस्य आकाशस्य वा जनिता उत्पादयिता अस्ति। सः सोमः परमेश्वरः पवते स्वाऽभ्यर्चकं नरं पवित्रीकुरुते मुक्तिं प्रयच्छतीत्यर्थः। जनिता= "जनिता मन्त्रे— ६।४।५३ इति निपातनेन णिलोपः ॥५॥ यद्वा
यः परमात्मा विश्वस्य सर्वस्य जगतः ब्रह्माण्डस्य प्राणतः प्रश्वासं गच्छतः प्राणिजातस्य पतिः स्वामी अस्ति। यश्च परमात्मा प्रथमः सर्वादिभूतः ब्रह्मणे चतुराननाय ब्रह्मज्ञानिने वा हृदये गाः चतस्रः वेदवाणीः अविन्दत प्रापयत्। ईदृशः यः इन्द्रः परमेश्वरः दस्यून् पापान् अधरान् निकृष्टान् अधोगतान् कृत्वा अवातिरत् अवधीत हतवान्। तं मरुत्वन्तं परमात्मानं सख्याय सखित्वक र्मणे मुक्तिप्राप्तिकर्मणे हवामहे आह्वयामहे गृह्णाम। जगतः= गम्लृ सृप्लृ गतौ, "वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्चेत्य ति प्रत्ययान्तो निपातितो जगच्छब्दः। प्राणतः= श्वस प्राणने अन च। अस्माल्लटः शतृ। अदादित्वाच्छपो लुक्। प्राणतस्पतिः षष्ठ्याः पतिपुत्रेति— विसर्जनीयस्य सत्वम्। सख्याय= सख्युः कर्म सख्यं "सख्युर्यः" इति यप्रत्ययः। हवामहे= ह्वेञो लटि बहुलं छन्दसीति सम्प्रसारणम् ॥५॥ मंत्रान्तरम् "यो विश्वानां गोपतिर्वशीय आरितः कर्मणि कर्मणि स्थिरः— " ऋ. मंड. १ सू. १०१ मं. ४ यद्वा "~~ऋ. मं. १ सू. ६ मं.~~"

यद्वा यः मनुष्यः अश्वानां पतिः अर्थात् क्षत्रियः, यः गवां वशी वैश्यः, यः जो पतिः सर्वेन्द्रियस्वामी ब्राह्मणः, यः कर्मणि कर्मणि = स्वस्ववर्णकर्मणि स्थिरः परिपक्वः स आरितः स्तुतः। य इन्द्रः जीवात्मा ब्राह्मणः क्षत्रियः वैश्यो वा वीडेः चित् पूर्वप्रयत्नेन अनुगन्तव्यः ... तं मरुत्वंतं जीवं सख्याय हवामहे

यद्वा विश्वेदेवास्त्रा ... मरुत्वन्तं सख्याय हवामहे ऋ. मं. १ सू. १०१ मं. ४

श्रेयानिति = परधर्मात् परात् स्वजातिवर्णाश्रमभिन्नात् धर्मात् आचारात् स्वनुष्ठितात् सम्यक्कृतया विहितात् विगुणः तत्तद्वर्णाश्रमगुणरहितोऽपि स्वधर्मः स्वकीयजातिवर्णाश्रमाऽनुकूलः धर्मः श्रेयान् श्रेष्ठः अस्ति। स्वभावनियतं स्वभावः स्वयं भाव्यते इति स्वभावः जातिः तमुद्दिश्य नियतं शास्त्रेण नियतीकृतं कर्म शमशौर्यकृषिपरिचर्यादिकं कर्तव्यं कार्यं कुर्वन् सम्पादयन् किल्बिषं चित्तशुद्धिप्रतिकूलं पापं न आप्नोति न प्राप्नोति ॥ ४७ ॥

(मूलगी.) श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४७ ॥

(वेदगी.) इह द स्याध ं न परो गमाथ यो गोपाः पुष्टिपतिर्व आजत
अस्मै कामायोप कामिनी विश्वे वो देवा उपसंयन्तु ॥ अथ कां ३ सू. ८ मं. ४

अर्थः = हे मनुष्य! इह अस्मिन् स्वाभाविक स्वजाति कर्मणि इत एव अस्थ वसाथ परः दूरे न गमाथ न गच्छत अर्थात् परजातिकर्मणि गमनं न कुरु अस्मै कामाय स्वजातिकर्मकामना पूर्तये कामिनीः लब्धासन्ताः विश्वे देवाः संयोजयन्तु तथा इर्यः सर्वसंसारप्रेरकः गोपाः पृथिवीरक्षकः पुष्टिपतिः सर्वेषां पुष्टिकर्ता परमात्मा वः युष्मान् स्वस्वजातिकर्मविधानाऽनुकूलम् आजत मुक्तिप्राप्तये स्थापयति ॥ ४ ॥

असक्तबुद्धिरिति = सर्वत्र शमशौर्यकृषिवाणिज्यादिकानां सर्वेषां कर्मणां फलेषु असक्तबुद्धिः असक्ता अननुरक्ता बुद्धिः यस्य सः असक्तबुद्धिः। जितात्मा जितः आत्मा मनो येन स जितात्मा वशीकृतमनाः। विगतस्पृहः विगताः दूरीभूताः स्पृहाः कामाः यस्य स विगतस्पृहः पुरुषः परमाम् अत्युत्कृष्टाम् नैष्कर्म्यसिद्धिं निर्गतं कर्म कर्मफलं यस्मात् तत् निष्कर्म, निष्कर्मणः भावः नैष्कर्म्यं ब्रह्मभावः तस्य सिद्धिं नैष्कर्म्यसिद्धिं परमपुरुषार्थसिद्धिं संन्यासेन सम्यक्कृतया ससाधनानां कर्मणां विधिना परित्यागेन अधिगच्छति प्राप्नोति ॥४९॥

(मूलगी॰) असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥४९॥
(वेदगी॰) न तमंहो न दुरितानि मर्त्यमिन्द्रावरुणा न तपः कुतश्चन।
यस्य देवा गच्छथो वीथो अध्वरं न तं मर्तस्य नशते परिह्वृतिः ॥८॥
ऋ॰ अष्ट॰ ५ अध्या॰ ६ व॰ ७ मं॰ ८ (मंड॰ ७ सू॰ ८२ मं॰ ७)

न तमिति = हे इन्द्रावरुणा! हे भक्तैश्वर्यसम्पन्नजीवात्मन्! हे वरुण! हे सर्वश्रेष्ठ! हे यते! तं विगतस्पृहं सर्वत्रासक्तबुद्धिं मर्त्यं मनुष्यम् अंहः पापं न नशते न व्याप्नोति। न च दुरितानि दुर्गमनानि पापफलानि च प्राप्नुवन्ति। कुतश्चन कस्मादपि निमित्तात् तपः लौकिकसंतापः तं न प्राप्नोति। हे देवा हे देवौ! हे स्वनिष्कामकर्मभिः प्रकाशमानौ विद्वांसौ! हे ज्ञानदानादिगुणयुक्तौ! युवां यस्य मर्तस्य मनुष्यस्य अध्वरं यज्ञं हिंसारहितां संगतिं वा गच्छथः प्राप्नुथः। युवां वीथः यस्य नैष्कर्म्यसिद्धिं कामयेथे तं मनुष्यं परिह्वृतिः परिबाधा न व्याप्नोति ॥४९॥

यज्ञ कुटिलता

सिद्धिमिति = हे कौन्तेय ! हे अर्जुन ! सिद्धिं नैष्कर्म्यसिद्धिं प्राप्तः मुमुक्षुः नरः यथा येन प्रकारेण ब्रह्म परमात्मानम् आप्नोति ब्रह्मस्वरूपम् अधिगच्छति तथा तेन प्रकारेण मे मत्तः निबोध जानीहि । ज्ञानस्य = नित्यशुद्धबुद्धस्वभावः आत्मा सदैकरसः इति यज्ज्ञानं तस्य ज्ञानस्य या परा अत्युत्कृष्टा निष्ठा स्थितिरस्ति । तामपि समासेनैव संक्षेपेणैव मे मत्तः निबोध जानीहि ॥ ५० ॥

(मूलगी.) सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥

(वेदगी.) . . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . .

कठोपनिषत् अ. ११ इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥

कठो. इन्द्रियेभ्यः चक्षुरादीन्द्रियेभ्यः हीति निश्चये अर्थाः रूपरसादयः विषयाः पराः सन्ति । अर्थेभ्यश्च रूपरसादिविषयेभ्यश्च मनः अन्तःकरणं परमस्ति । मनसोऽन्तःकरणात् बुद्धिः विवेचनात्मिका शक्तिः परा अस्ति । बुद्धेः विवेचनात्मकशक्तेः आत्मा महान् अत्यर्थं परः अस्ति । महतः अव्यक्तं परमस्ति । अव्यक्तात् पुरुषः परमात्मा परः अस्ति । पुरुषात् परमात्मनः परं न किञ्चित् अन्यत्किञ्चिदपि नास्ति । सा काष्ठा सीमा अस्ति सा परा गतिः मुक्तिरस्ति ॥

विविक्तेति = विविक्तसेवी एकान्तदेशवासी लघ्वाशी लघु हितं मितं मेध्यम् अन्नमशितुं शीलमस्येति लघ्वाशी यतवाक्कायमानसः यतानि संयतानि स्ववशीकृतानि वाक्कायमानसानि येन तथाभूतः, विशुद्धया मलविक्षेपरहितया बुद्ध्या अध्यवसायात्मिकया बुद्ध्या युक्तः मिलितः धृत्या सात्त्विक्या धृत्या आत्मानं चित्तं नियम्य संरुध्य शब्दादीन् विषयान् शब्दस्पर्शरूपरसगन्धान् विषयान् त्यक्त्वा विहाय रागद्वेषौ प्रियाप्रिये वस्तुनी व्युदस्य परित्यज्य च अहंकारम् अभिमानं बलं बलं दर्पं कामं क्रोधं परिग्रहं शरीररक्षानिमित्तं कौपीनकाषायादि विमुच्य विहाय नित्यं सर्वदा वैराग्यं विषयेभ्यः विगतो निर्गतो रागः इच्छा यस्य स विरागः तस्य भावः वैराग्यं सर्वत्रेच्छाराहित्यं समुपाश्रितः सन् ध्यानयोगपरः ध्यानं योगश्च ध्यानयोगौ तत्र परः ध्यानयोगपरः निर्ममः निःशेषेण गतो निर्गतो देहे ममभावो यस्य स निर्ममः परदेहे इव स्वदेहे ममतारहितः। शान्तः शान्तिमापन्नः ब्रह्मभूयाय ब्रह्मभावाय ब्रह्मभावो नाम सच्चिदानन्दैकरसब्रह्मात्मनाऽवस्थानं तस्मै ब्रह्मभावाय कल्पते ब्रह्माकारेण तिष्ठतीति भावः ॥ ५१, ५२, ५३ ॥

(मूलगी.) बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च। शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः। ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम्। विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥
(वेदगी.) देवो न यः सविता सत्यमन्मा क्रत्वा निपाति वृजिनानि विश्वा। पुरुप्रशस्तो अमतिर्न
सत्य आत्मेव शेवो दिधिषाय्यो भूत्, ऋ. अष्ट. १ अध्या. ५ व. १९ मं. २ (मं. १ सू. ७३ मं. २)
ये बध्यमानमनु दीध्याना अन्वैक्षन्त मनसा चक्षुषा च। अग्निष्टानग्रे प्रमुमोक्तु देवो यद्
विश्वकर्मा प्रजया संरराणः ॥ ३ ॥ अथ. कां. २ अनु. ६ सू. ३४ मं. ३ यद्वा ऋ. मं. १० सू. १२८ मं. ६

देव इति = सविता सत्यधर्मप्रसविता देवो न, द्योतमान इव यः शान्तः पुरुषः। सत्यमन्मा = सत्यम् अवितथं मन्म ज्ञानं यस्य सः सत्यमन्मा सत्यज्ञानः यथार्थदर्शी क्रत्वा आत्मीयेन कर्मणा कृत्वा वा विश्वा = विश्वानि सर्वाणि वृजिनानि अहंकारबलदर्पकामक्रोधस्वरूपाणि पापानि "विभक्तिव्यत्ययः", विश्वेभ्यः वृजिनेभ्यः सर्वेभ्यः पापेभ्यः निपाति आत्मानं नितरां रक्षति। अपि च पुरुप्रशस्तः पुरुभ्यः बहुभ्यः भक्तेभ्यः प्रशस्तः श्रेष्ठः यद्वा बहुभिः ज्ञानिभिः प्रशस्तः स्तुतः अमतिर्न, स्वरूपमिव सत्यः साक्षात्सत्यस्वरूपः शेवः सुखरूपः आत्मेव परमप्रेमास्पदतया निरतिशयानन्दस्वरूपः आत्मा यथा सर्वान् प्राणिनः सुखयति "एतस्यैवानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति", "एष ह्येवानन्दयाति", एवंभूतः आत्मा दिधिषाय्यः स्वराज्यकर्मसु स्थापयितुं योग्यो भूत् भवति। २ ॥ ये इति = ये शुद्धबुद्धयः यतवाक्कायमानसाः परमेश्वरध्यानपरायणः योगिनः बध्यमानं कामक्रोधलोभमोहंकारैः बध्यमानं जनम् अनुदीध्यानाः अनुकम्पां दृष्ट्वा ध्यायमानाः सन्तः मनसा शुद्धमनसा सर्वत्र परमात्मव्याप्तिं दृष्ट्वा चक्षुषा स्नेहवशात् दयादृष्ट्या अन्वैक्षन्त अनुपश्यन्ति स्नेहात् कारुण्यात् वा न जहाति। विश्वकर्मा विश्वं कर्म कर्तुं यं यस्य स विश्वकर्मा विश्वस्य कर्ता देवः प्रकाशस्वरूपः अग्निः सर्वेषामग्रणीः परमेश्वरः तान् <s>कामक्रोधादिहीनान्</s> प्रजया स्वसृष्ट्या संरराणः संरममाणः सन् सर्वान्तर्यामी ईश्वरः तान् कामक्रोधादिहीनान् जनान् अग्रे सर्वतः पूर्वमेव प्रमुमोक्तु प्रकर्षेण मुक्तिं प्रयच्छतु। सत्यमन्मा = मननं मन्म। मन ज्ञाने "अन्येभ्योऽपि दृश्यन्ते", इति मनिन् प्रत्ययः। वृजिनानि = वृजी वर्जने "वृजेः किच्च-", इनन् प्रत्ययः अमतिः अमेरतिः। दिधिषाय्यः = दधातेर्दिधिषाय्यः (उणा. ३।९६) इति साय्यप्रत्ययान्तो निपात्यते। ऐक्षन्त = ईक्ष दर्शने "लङ्" लकारः। मुमोक्तु = मुच्यते शपः श्लुः। रराणः = रै शब्दे इत्यस्मात् लिटः कानच्। अग्निष्टान = "अग्नेस्तुत्स्तोमसोमाः" इति षत्वम् ॥ ३५

ब्रह्मभूतः इति = प्रसन्नात्मा अहंकारादिपरित्यागेन प्रसन्नः मुदितः आत्मा मनो यस्य स प्रसन्नात्मा, ब्रह्मभूतः विदेहमुक्तः ब्रह्मवित्तम इत्यर्थः न शोचति न कस्याऽपि विनष्टवस्तुनः शोकं कुरुते, न कांक्षति न कस्यापि वस्तुनः कामनां करोति। सर्वेषु सकलेषु भूतेषु प्राणिषु समः समानदृष्टिं पश्यन् पराम् अत्युत्तमां मद्भक्तिं मदीयां भक्तिं लभते प्राप्नोति ॥५४॥

(मूलगी.) ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥५४॥

(वेदगी.) यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह।
ब्रह्मा मा तत्र नयतु ब्रह्मा ब्रह्म दधातु मे ब्रह्मणे स्वाहा ॥८॥
अथ. कां. १९ अनु. ५ सू. ४२ मं. ८

यत्रेति = ब्रह्मविदः ब्रह्म परमेश्वरं वेदं वा वेदज्ञानं वा जानातीति ब्रह्मवित्, ते ब्रह्मविदः ज्ञानिनः पुरुषाः यत्र यस्मिन् मुक्तिपदे दीक्षया "ब्रह्मज्ञानाय दृढव्रतपालनप्रतिज्ञा दीक्षा भवति। तया दीक्षया ब्रह्मज्ञानव्रतपालनया तपसा तपश्चर्येण सह यान्ति ब्रह्म प्राप्नुवन्ति। ब्रह्मा सर्वत्र बृंहणशीलः परमेश्वरः मां मां दासं तत्र तस्मिन् ब्रह्मपदे नयतु प्रापयतु। ब्रह्मा परमेश्वरः वेदज्ञाता आचार्यो वा ब्रह्म ब्रह्मपदं मे मह्यं दधातु धारयतु। सर्वं मे ज्ञानं ब्रह्मणे परमेश्वराय स्वाहा सुहुतहुतं भवतु ॥८॥

भक्त्येति = यः मुमुक्षुः पुरुषः भक्त्या निर्विकल्पेन समाधिना यावान् यावन्मात्रः यश्च यादृशस्वरूपः तत्त्वतः वास्तवस्वरूपतोऽस्मि । इति मां परमात्मानम् अभिजानाति सम्यक्तयाऽनुभवति । ततः स्वरूपावबोधसमयानन्तरं मां परमात्मानं तत्त्वतः वास्तविकस्वरूपतः ज्ञात्वाऽवबुद्ध्य तदनन्तरम् ईदृशज्ञानानन्तरम् विशते नित्यानन्देऽखण्डे परे ब्रह्मणि लयं प्राप्नोति ॥ ५५ ॥

(मूलगी.) भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥

(वेदगी.) पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः । समुद्रे अन्तः कवयो
विचक्षते मरीचीनां पदमिच्छन्ति वेधसः ॥ १ ॥ ऋ. अष्ट. ८ अध्या. ८ व. ३६ मं. १ (मं. १ मंड. १० सू. १७७) तै. आ. ३, ११, १.

(यद्वा) महत्नाम गुह्यं पुरुस्पृग् येन भूतं जनयो येन भव्यम् । प्रत्नं जातं ज्योतिर्यदस्य
प्रियं प्रियाः समविशन्त पञ्च ॥ २ ॥ ऋ. अष्ट. ८ अध्या. १ व. १६ मं. २ (मंड. १० अनु. ४ सू. ५५ मं. २)

पतङ्गमिति = विपश्चितः वेदान्तसिद्धान्तज्ञातारः यतयः असुरस्य सकलप्राणिप्राणप्रदातुः सर्वोपाधिविहीनस्य परब्रह्मणो मायया शक्त्या अक्तं जीवरूपेण अभिव्यक्तमात्मानं यद्वा परब्रह्मणः मायया ब्रह्मबुद्ध्या अक्तम् अभिव्यक्तं पतङ्गं = पतति व्याप्नोतीति पतंगः परमात्मा तं पतङ्गं परमात्मानं हृदा अन्तर्मुखेन मनसा पश्यन्ति साक्षात्कुर्वन्ति इतिभावः । अपि च ते कवयः क्रान्तदर्शिनः वेदान्ताभिज्ञाः मुमुक्षवः समुद्रे = समुद्रवन्ति अस्मात् भूतानि इति समुद्रः परमात्मा तस्मिन्नधिष्ठाने भूतेऽन्तर्मध्ये सर्वं दृश्यजातम् अध्यस्तत्वेन विचक्षते विपश्यन्तीति अतः दृग्व्यतिरिक्तस्य सर्वस्य विनश्वरत्वात् वेधसः ब्रह्मज्ञानिनः ते मरीचीनां वृत्तिज्ञानानां पदम् अधिष्ठानभूतं सच्चिदानन्दस्वरूपं यत्परं ब्रह्म तदेव इच्छन्ति तद्भावप्राप्तिमेव कामयन्ते ॥ १ ॥ (यद्वा)

महदिति = हे योगिन् ! हे मुमुक्षो ! तत् तस्य परब्रह्मणः गुह्यं गोपनीयम् अन्यैः अविज्ञातं पुरुस्पृक् = पुरुभिः बहुभिः भक्तैः स्पर्शनीयं स्पृहणीयं वा नाम = 'ओम्' इत्यभिधानं शरीरं वा महत् अत्यन्तं प्रवृद्धमस्ति । येन नाम्ना भूतं पूर्वोत्पन्नपदार्थजातम्, भव्यम् अग्रेभाविपदार्थजातं सर्वं जनयः उत्पन्नम् अस्ति । सर्वं भूतभव्यात्मकं जगत् परमेश्वरात् उत्पद्यते । अस्य परमात्मनः प्रत्नं पुराणं पूर्वकालीनं यत् ज्योतिः द्योतमानं प्रकाशमण्डलम् आदित्याख्यम् प्रियं प्रियभूतं तच्च जातमुत्पन्नमस्ति । प्रियाः भक्त्युद्रेकिनः प्रीयमाणाः भगवत्प्रियाः पञ्च पञ्चजनाः पुरुषाः प्रियं सर्वप्रियभूतम् परमात्मानं समविशन्त प्रविशन्ति ॥ २ ॥

सर्वेति = मद्व्यपाश्रयः अहं परमेश्वर एव व्यपाश्रयः संसारविमुक्तये आश्रयणीयः यस्य स मद्व्यपाश्रयः ईश्वराश्रयः यः योगी सर्वकर्माणि अपि सर्वाणि नित्यनैमित्तिकश्रौतस्मार्तानि कर्माणि अपि सदा सततं कुर्वाणः मत्प्रसादात् मम परमेश्वरस्य प्रसादात् अनुग्रहात् शाश्वतं नित्यम् अव्ययं वृद्धिक्षयविकाररहितं परं मोक्षाख्यं स्थानम् अवाप्नोति प्राप्नोति ॥ ५६ ॥

(मूलगी॰) सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥

(वेदगी॰) परमां तं परावतमिन्द्रो नुदतु वृत्रहा।
यतो न पुनरायति शश्वतीभ्यः समाभ्यः ॥ २ ॥
अथ॰ कां॰ ६ अनु॰ ८ सू॰ ७५ मं॰ २ यद्वा "अनवद्यैः" ऋ॰ मं॰ १ सू॰ ६ मं॰ ८

परमामिति = वृत्रहा वृत्रं पापं हन्ति इति वृत्रहा पापहन्ता इन्द्रः परमैश्वर्यसम्पन्नः परमेश्वरः तं परया भक्त्या सेवमानं भक्तं जनं परमाम् अत्युत्तमां परावतं संसारादतिशयदूरवर्तमानं स्थानं नुदतु नुदति स्वप्रसादात् प्रेरयति प्रेषयति। यतः यस्मात् स्थानात् स भक्तः शश्वतीभ्यः अनन्ताभ्यः समाभ्यः वेलाभ्यः अनन्तसमयादपि न पुनरायति पुनर्नावर्तते इति। परावतम् = "उपसर्गाच्छन्दसि धात्वर्थे" इति वतिः प्रत्ययः ॥ २ ॥

चेतसेति= निष्कामकर्मसम्पादनसंतुष्ट परमेश्वर प्रसादात् मुक्तिरिति ज्ञानविशिष्टेन चेतसा विवेकबुद्ध्या सर्वकर्माणि सर्वाणि कर्माणि श्रौत-स्मार्तादीनि कर्माणि मयि परमेश्वरे संन्यस्य संत्यज्य मयि समर्प्येत्यर्थः। मत्परः अहमेव परः प्राप्यः पदार्थः यस्य स मत्परः, बुद्धियोगं 'सर्वं खल्विदं ब्रह्म' व्याप्तम्,, इति ज्ञानयोगम् उपाश्रित्य सर्वदा वेदान्तविचारे तत्परो भूत्वा मच्चित्तः मयि परमात्मनि चित्तं मनो यस्य स मच्चित्तः सततं नित्यं भव॥५७॥

(मूलगी०) चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव॥५७॥

(वेदगी०) मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं ते अस्तु।
मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम्॥ मन्त्र: पार० कां० २ कं० २ मं० १६

ममेति= हे मुमुक्षो! हे जीवात्मन्! मम व्रतं स्वकीयं व्रतं सम्पूर्तिध्यानयोगव्रतं ते तव भक्तस्य हृदयं हृदये (बुद्धौ) विभक्तिव्यत्ययः दधामि धारयामि। अत एव ते तव मुमुक्षोः चित्तं हृदयं मम परमेश्वरस्य अनुचित्तं चित्तानुकूलं म अस्तु अर्थात् त्वं बुद्धियोगमुपाश्रित्य सततं मच्चित्तः भव। मम परमेश्वरस्य वाचम् सर्वकर्मसंन्यासोपदेशमयीं वाणीम् एकमनाः ~~[illegible]~~ मय्येकसमाहितमनाः जुषस्व सेवस्व कुरु। बृहस्पतिः बृहतां ज्ञानयोगबुद्धीनां पतिः स्वामी ज्ञानोपदेष्टा आचार्यः त्वा त्वां शिष्यं मह्यम् मत्परमेश्वराय नियुनक्तु योजयतु।॥

मच्चित्त इति = मच्चित्तः अहमेव चित्ते मनसि यस्य सः मच्चित्तः मन्मनाः त्वं मत्प्रसादात् मम कृपायाः सर्वदुर्गाणि सर्वाणि दुःखेन गन्तुं शक्यानि दुर्गाणि दुस्तराणि अविद्यादीनि तरिष्यसि। अविद्यादिपारं यास्यसीति। अथ चेत् मद्वचनमननाऽभावे अहंकारात् अहमेव सर्वशास्त्रज्ञः मत्तः अपरः कोऽपि विद्वान् नास्तीत्यभिमानात् मद्वचनं न श्रोष्यसि श्रवणमपि न करिष्यसि अथ च श्रुत्वाऽपि तन्नाचरिष्यसि च तर्हि विनंक्ष्यसि विनाशं प्राप्स्यसि ॥ ५८ ॥ यदिति = अहंकारम् अहमेव पण्डितः अहमेव ज्ञानीत्यात्मकम् अभिमानम् आश्रित्य अवलम्ब्य न योत्स्ये युद्धं न करिष्यामि इति इत्थं यत् यदि मन्यसे स्वीकुरुषे। एषः ते तव व्यवसायः निश्चयः मिथ्या निरर्थकः। प्रकृतिः क्षात्रधर्मस्वभावः त्वां प्रकृत्यधीनं त्वां नियोक्ष्यति युद्धार्थं नियुक्तं करिष्यति ॥ ५९

(मूलगी॰) मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि।
अथ चेत्त्वमहंकारान्न श्रोष्यसि विनंक्ष्यसि ॥ ५८ ॥ यदहंकारमाश्रित्य न
~~(वेदगी॰)~~ योत्स्य इतिमन्यसे। मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥

(वेदगी॰) नहः स्वोदक्षो वरुण ध्रुतिः सा सुरा मन्युः विभीदको अचित्तिः।
अस्ति ज्यायान् कनीयस उपारे स्वप्नश्चनेदनृतस्य प्रयोता ॥ ६ ॥
ऋ॰ अष्ट॰ ५ अध्या॰ ६ व॰ ८ मं॰ ६ (मंड॰ ७ अनु॰ ५ सू॰ ८६ मं॰ ६)

हे वरुण! हे श्रेष्ठ जीवात्मन्! सुरा प्रमादकारी मदस्वरूपा मन्युः क्रोधमयी विभीदकः भयोत्पादिका अचित्तिः अज्ञानमयी मोहात्मिका सा ध्रुतिः ~~स्थिरा~~ ~~……~~ जन्मसमये एव निर्मिता प्रकृतिः एव ~~……~~ ब्राह्मणक्षत्रियादिधर्मप्रवृत्तिकारणम्। न तु सः अहमेव पण्डितः अहमेव ज्ञानी इत्यहंकार एव स्वोदक्षः स्वरूपवद्बलं तन्निवृत्तौ प्रवृत्तौ वा कारणम् अस्ति। कनीयसः अल्पस्य आनन्दहीनस्य तुच्छस्य उपारे समीपे ज्यायान् नियन्तृत्वेन स्थितः अधिकः ~~……~~ सहजः स्वभावः अस्ति। स एव स्वभावः प्रकृतिर्वा तं कनीयांसम् जीवात्मानं स्वस्ववर्णधर्मे प्रवर्तयति। स्वप्नश्चन = स्वप्नोऽपि अनृतस्य मिथ्याव्यवसायस्य प्रयोता प्रकर्षेण मिश्रयिता भवति। ध्रुतिः = ध्रु गतिस्थैर्ययोरिति धातोः क्तिन् प्रत्ययः ॥ ६॥

अहंकाराविष्टस्य पुरुषस्य

स्वभावजेनेति = हे कौन्तेय! हे अर्जुन! त्वं मोहात् अविवेकात् स्वभ्रातृत्वोऽन्यनुरागात् यत् युद्धात्मके कर्मे कर्तुं विधातुम् न इच्छसि इच्छां न करोषि स्वभावजेन पूर्वजन्मशुभाऽशुभकर्मसंस्कारस्वरूपः प्रवृत्तिनिवृत्तिहेतुः स्वभावः प्रकृतिगुणविशेषः तस्मात् जायते इति स्वभावजं तेन स्वभावजेन स्वाभाविकेन स्वेन आत्मीयेन कर्मणा निबद्धः स्पृष्टः बध्यते प्राप्तो वा त्वम् अवशोऽपि पराधीनोऽपि प्रकृतिवशोऽपीत्यर्थः। तत् युद्धात्मके कर्मे कारयिष्यसि युद्धे प्रवृत्तो भविष्यसीत्यर्थः ॥६०॥

(मूलगी॰) स्वभावजेन कौन्तेय! निबद्धः स्वेन कर्मणा।
कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत् ॥६०॥

(वेदगी॰) अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः।
यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥५॥
ऋ॰ अष्ट॰ ८ अध्या॰ ७ व॰ ११ मं॰ ५ (मंड॰ १० अनु॰ १० सू॰ १२५ मं॰ ५) अथ॰ ४ कां॰ ३॰ सू॰ ३ मं॰

मानुषेभिः मनुष्यैः

अहमिति = अहं स्वयमेव परमात्मा देवेभिः देवैः ज्ञानिभिर्विद्वद्भिर्वा जुष्टं सेवितं स्वाभाविकम् इदं वचनं वदामि उपदिशामि। यं पुरुषं तत्तत्प्राक्तनकर्मानुकूलं फलस्वरूपं कर्म कारयितुं कामये वाञ्छामि। तं तं पुरुषम् उग्रं उग्रं कर्म कारयितुं प्रवर्तयामि तं ब्रह्माणं ब्रह्मज्ञानिनं कृणोमि। तमेव ऋषिम् अतीन्द्रियार्थदर्शिनं कृणोमि करोमि तमेव सुमेधां शोभनप्रज्ञं च कृणोमि करोमि ॥५॥

ईश्वर इति = हे अर्जुन! ईश्वरः सर्वलोकनियन्ता यंत्रारूढानि यंत्रे स्वस्वनियममये यंत्रे आरूढानि स्थितानि सर्वभूतानि ब्रह्मादिस्तम्बपर्यन्तानि सर्वाणि भूतानि मायया स्वशक्त्या भ्रामयन् स्वस्व कर्मसु प्रवर्तयन् सर्वभूतानां सर्वेषां भूतानां प्राणिनाम् अप्राणिनाञ्च हृद्देशे हृदये तिष्ठति वर्तते ॥६१॥

(मूलगी॰) ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यंत्रारूढानि मायया ॥६१॥

(वेदगी॰) विशं विशं मघवा पर्यशायत जनानां धेना अवचाकशद्वृषा।
यस्याह शक्रः सवनेषु रण्यति स तीव्रैः सोमैः सहते पृतन्यतः ॥६॥
ऋ॰ अष्ट॰ ३ अध्या॰ ८ व॰ २५ मं॰ ६ (मं ३॰१॰सू॰ ४३ मं॰ ६) अथ॰ कां॰ २०॰ सू॰ १६ मं॰ ६

विशमिति = वृषा भक्तानां कामानां वर्षयिता, मघवा सर्वैः पूजनीयः इन्द्रः परमेश्वरः विशं विशं सर्वान् मनुष्यान् सर्वप्राणिहृद्देशे पर्यशायत परिशेते तिष्ठति। जनानां मुमुक्षुजीवानां धेनाः स्तुतीः अवचाकशत् अभिपश्यति हृद्देशे तिष्ठन् सर्वप्राणिनां कर्माणि पश्यतीत्यर्थः। किञ्च शक्रः सर्वशक्तिसम्पन्नः परमेश्वरः यस्य अह = यस्य यजमानस्य एव सवनेषु प्रातर्मध्यान्हसायंकालिकेषु यज्ञेषु रण्यति रमते। स एव यजमानः मुमुक्षुः यतिः तीव्रैः तीव्राकारैः सोमैः स्तवनैः पृतन्यतः भगवद्भक्तेन सह युद्धमिच्छतः कामक्रोधप्रभृतिशत्रून् सहते ~~अभिभवति~~ तत्प्रहारसहनं प्रकरोति तत्प्रभावमभिभवतीत्यर्थः ॥६॥
"एष मे आत्माऽन्तर्हृदये" छान्दो॰ ३।१४।३ "यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तर आकाशः"
छान्दो॰ ८।८।१

तमेवेति= हे भारत! हे भरतकुलोत्पन्न! अर्जुन! त्वं सर्वभावेन सर्वत्र परमेश्वर एव विद्यते इतिभावेन तं परमेश्वरम् शरणं गच्छ आश्रय। तत्प्रसादात् तस्य परमेश्वरस्य प्रसादात् अनुग्रहात् परां शान्तिं सर्वोत्कृष्टां शान्तिं प्राप्स्यसि लप्स्यसे तथा च शाश्वतं नित्यं स्थानं पदम् मुक्तिपदं प्राप्स्यसीति ॥६२॥

(मूलगी०) तमेव शरणं गच्छ सर्वभावेन भारत।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥६२॥

(वेदगी०) तव श्रहमग्ने ऊतिभिर्मित्रस्य च प्रशस्तिभिः।
द्वेषोयुतः न दुरिता तुर्याम मर्त्यानाम् ॥८॥
ऋ० अष्ट० ४ अध्या० १ व० १ मं० ८ (मं० ३ ४ अनु० १ सू० १ मं० ५) (यजुः)

"तव क्रत्वा सनेयं तव रातिभिरग्ने तव प्रशस्तिभिः। त्वामिदाहुः प्रमतिं वसो ममाग्ने हर्षस्वा दातवे,, ऋ० अष्ट० ६ अध्या० १ व० ३४ मं० २१ (मं० ३ सू० १९ मं० ३६) यद्वाय एके इत्‌ तमे दुहि कृष्टीनां वि चर्षणिः। पतिर्जज्ञे वृषक्रतुः,, ऋ० मं० ६ सू० ४५ मं० १६

तवेति= हे अग्ने! हे ज्योतिःस्वरूपपरमात्मन्! अहं भवतः शरणाम् आपन्नः मित्रस्य सर्वेषां मित्रभूतस्य तव परमात्मनः ऊतिभिः युष्मत्कर्तृकरक्षणैः च तथा तव प्रशस्तिभिः अस्मत्कृतैः स्तोत्रैः मर्त्यानां मरणधर्माणां मनुष्याणां दुरिता दुरितानि पापानि पापसाधनकर्माणि च द्वेषोयुतो नः= द्वेषयुक्तान् कामक्रोधादि शत्रून् इव तुर्याम तरेयम्। त्वद्रक्षणैः त्वत्सम्बन्धिस्तुतिभिश्च बाह्याऽभ्यन्तरशत्रून् तरेयमित्यर्थः। ऊतिभिः= अव रक्षणे क्तिन्। "ज्वरत्वरस्त्रिव्यविमवामुपधायाश्चेत्यूठ्,, "ऊतियूतिजूतिसातिहेतिकीर्तयश्चेत्यन्तोदात्तत्वेन निपातितः। प्रशस्तिभिः= शंस स्तुतौ क्तिन्। द्वेषोयुतः= द्विष् अप्रीतौ भावे असुन्प्रत्ययः। यु मिश्रणे "कर्तरि क्विप्,, तत्र कृदुत्तरपदप्रकृतिस्वरत्वम्। तुर्याम तृ प्लवनतरणयोः प्रार्थनायां लिङ्। यासुट् "लिङः सलोपोऽनन्त्यस्येति सकारलोपः। "बहुलं छन्दसीति,, शपो लुक् "उदोष्ठ्यपूर्वस्य,, "बहुलं छन्दसि,, इत्युत्वम् ॥८॥ तवेति= हे अग्ने! ज्योतिःस्वरूपपरमात्मन्! तव त्वदीयेन परिचरणरूपेण क्रत्वा कर्मणा सनेयं शरणं

"पन्य इदुपगायत पन्यं उक्थानि शंसत । ब्रह्मा कृणोत पन्य इत्., १८ ॥
ऋ. अष्ट. ६ अध्या. ३ व. ४ मं. १८ (मंड. ८ अनु. १ सू. ३२ मं. १८)

त्वां संभजेयं त्वां शरणम् आगच्छेयम् । तव परमात्मनः रातिभिः स्वैः आत्मसमर्पणैः सनेयं त्वां भजेयम् । तथा तव परमात्मनः प्रशस्ति-
भिः स्तोत्रैः सनेयं त्वां संभजेयम् । हे वसो ! हे सर्ववासस्वरूपपरमात्मन् ! मम शरणमापन्नस्य मम यजमानस्य स्तोतुः वा प्रमतिं प्रकृष्ट
बुद्धिं प्रकृष्ट ज्ञानिनम् त्वाम् इत् त्वामेव आहुः ब्रह्मवादिनः कथयन्ति । हे अग्ने ! हे ज्योतिःस्वरूपब्रह्मन् ! दातवे स्वशरणं दातुं हर्षस्व हृष्टो
भव हर्षयुक्तः सन् महां शरणं प्रयच्छेत्यर्थः ॥२९॥ पन्य इति = हे उपगातारः मम त्वं ! पन्ये स्तुत्ये एव परमात्मनि उपगा-
यत स्तुत्युपगानं कुरुत । पन्ये स्तुत्ये एव परमात्मनि उक्थानि स्तोत्राणि शंसत गायत । हे स्तोतारः ! पन्ये स्तुत्ये एव परमात्मनि
ब्रह्म ब्रह्माणि स्तोत्राणि कुरुत ॥ १८

इति ते इति= अहमपि आसं पुरा त्वम् अपि अभूदित्यारभ्य स्थानं प्राप्स्यसि शाश्वतम्„ इत्यन्तं गुह्यात् गोप्यात् गुह्यतरं गोप्यतरं ज्ञानं मया ते शरणम् प्रपन्नाय तुभ्यम् आख्यातम् कथितम्। त्वम् एतद् मत्प्रोक्तं ज्ञानम् अशेषेण सकलं विमृश्य विचार्य यथा येन प्रकारेण इच्छसि इच्छां करोषि तथा तेनैव प्रकारेण कुरु विधेहि ॥ ६३ ॥

(मूलगी॰) इति ते ज्ञानमाख्यातं गुह्यात् गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥

(वेदगी॰) गुहाहितं गुह्यं गूळ्हमप्स्वपीवृतं मायिनं क्षियन्तम् ।
उतो अपो द्यां तस्तभ्वांसमहन्नहिं शूर वीर्येण ॥ ५ ॥
ऋ॰ अष्ट॰ २ अध्या॰ ६ व॰ ३ मं॰ ५ (मंड॰ २ अनु॰ १ सू॰ ११ मं॰ ५)

गुहाहितमिति= हे शूर! हे ज्ञानशूर! गुहाहितं गुहायां हृदयाकाशे हितं निहितम्, अत एव गुह्यं कस्मै अपि अप्रकाश्यम् गूढं ~~गुह्य~~ गुह्यतरं अप्सु कर्मसु अपीवृतं तिरोहितम् [ज्ञानमहिमा येन ज्ञानं] मायिनं ब्रह्मशक्तिमन्तं [सर्वशक्तिमन्तं] क्षियन्तं सर्वमुक्तवासकर्तृकम् उतो अपि च ~~अपो~~ द्यां ~~दिवं~~ ~~तस्तभ्वांसम्~~ [तस्तभ्वांसम्] [ज्ञानविकसितं हृदयाकाशे] ~~स्वसामर्थ्येन~~ ~~सकलम्~~ [सामर्थ्येन] अज्ञानं ~~अहन्~~ ~~हतवानसि~~ [अपः दूरीकरु]। तथा वीर्येण स्वसामर्थ्यभूतेन ज्ञानवीर्येण अहिं पापात्मकम् अज्ञानम् अहन् ~~हतवान्~~ ~~असि~~ ॥ ५ ॥
[अज्ञानात्मकं सर्पं वा] [जहि]

सर्वगुह्येति = सर्वगुह्यतमं सर्वेषु गुह्येषु अत्यन्तरहस्यतमं मे मम परमेश्वरस्य परमम् अत्युत्तमं वचः भूयः पुनः शृणु आकलय। त्वं मे मम इष्टः प्रियः असि। ततः तस्मात् इति बुद्ध्वा ते तुभ्यं दृढं यथा स्यात्तथा हितं हितसाधनं वचनं वक्ष्यामि कथयिष्यामि त्वं सावधानतया शृणु ॥ ६४ ॥

तत्र

(मूलगी.) सर्वगुह्यतमं भूयः शृणु मे परमं वचः।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४ ॥

(वेदगी.) तमिद्वोचेमा विदथेषु शंभुवं मंत्रं देवा अनेहसम्।
इमां च वाचं प्रतिहर्यथा नरो विश्वेद्वामा वो अश्नवत ॥ ६ ॥
ऋ. अष्ट. १ अध्या. ३ व. २१ मं. १ ऋ. मं. १ सू. ४० मं. ६

तमिदिति = हे देवाः! हे विद्वांसः! ज्ञानेन द्योतमानाः यतयः! तमित् तमेव शंभुवं सुखस्य भावयितारम् अनेहसं अहिंसनीयं दोषरहितं मंत्रं भगवज्ज्ञानप्रतिपादकं मननात्मकं विवेके विदथेषु ज्ञानयज्ञेषु "विदथानि वेदनानि," "विदथानि प्रचोदयन्," इत्यपि निगमो भवति, (निरु. ६।७) वोचेम ब्रवाम। हे नराः! हे ज्ञानिनः मनुष्याः इमां च = वेद मया उच्यमानां मंत्ररूपां वाचं वाणीं प्रतिहर्यथ यूयं कामयध्वम्। तर्हि विश्वा सर्वो इत् एव वामा वननीया भजनीयो वाक्ये वो युष्मान् मुमुक्षून् अश्नुवत व्याप्नुयात्। वोचेम इत्यत्र परिभाषणे आशीर्लिङ् "लिङ्याशिष्यङ्," इत्यङ्। वच उम् इत्युमागमः "छन्दस्युभयथा," इति सार्वधातुकत्वात् "लिङः," सलोपोऽनन्त्यस्येति यासुटः सकारस्य लोपः। "अतो येयः," इतीयादेशः। "आद्गुणः," इति गुणः। विदथेषु = विद ज्ञाने विद्यते फलमनेन लाभते इति विदथो यज्ञः ज्ञाने वा "रुदिविदिभ्यः ङित्," (उणा. ३।११४) इत्यथप्रत्ययः। शंभुवम् = भवतेरन्तर्भावितण्यर्थात् "क्विप् च," इति क्विप् "ओः सुपि," ६।४।८३ इति यणादेशस्य "न भूसुधियोः," इति प्रतिषेधः। प्रतिहर्यथा = हर्य गतिकान्त्योः। अश्नुवत = अशू व्याप्तौ लेटि अडागमः। व्यत्ययेन परस्मैपदम्। "इतश्च लोपः," इतीकारलोपः। इयङुवङ्भ्यां गुणवृद्धी भवतः विप्रतिषेधेन," इति गुणः। ६ ॥

मन्मना इति = मन्मनाः मयि परमात्मनि एव मनो चित्तं यस्य सः, मन्मनाः मच्चित्तः। मद्भक्तः मामेव भजतीति मद्भक्तः भव। मद्याजी = मामेव यष्टुं शीलमस्या
स्तीति मद्याजी मद्यजनशीलो भव। मां परमात्मानं नमस्कुरु। मां सच्चिदानन्दस्वरूपं परंब्रह्म एव एष्यसि प्राप्स्यसि। ते तव अस्मिन्निमित्ते
सत्यं व्यलीकं प्रतिजाने प्रतिज्ञां करोमि। यतः त्वं मे मम प्रियोऽसि इष्टोऽसीत्यत्र संशयलेशोऽपि नास्ति ॥६५॥

(मूलगी·) मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥६५॥

(वेदगी·) अहं गृभ्णामि मनसा मनांसि मम चित्तमनु चित्तेभिरेत।
मम वशेषु हृदयानि वः कृणोमि मम यातमनुवर्त्मान एत ॥ २ ॥
अथ· कां· ६ अनु· १· सू· ९५ मं· २

अहमिति = अहं परमात्मा मनसा स्वमनसा मनांसि भक्तानां मनांसि गृभ्णामि गृह्णामि स्वायत्तीकरोमि। मम ~~मदीयं~~ चित्तम् अनु ~~चित्तेभिः~~ चित्तेभिः
अनुकूल चित्तेभिः मनोभिः अनु आ इत = अनुकूलं कृत्वाऽऽगच्छत। मम वशेषु ममाधीने वः युष्माकं हृदयानि मनांसि कृणोमि
करोमि। मम यातम् अनु मदाचरणाऽनुकूलं अनुवर्त्मानः अनुचलन्तः आ+इत = आगच्छत ॥ २ ॥

सर्वधर्मानिति = श्रद्धाभक्तिविहितश्रौतस्मार्तकर्मनष्टपापौघः त्वं सर्वधर्मान् निष्प्रयोजनान् असद्विषयान् मुक्तिप्रतिबन्धकान् सर्वान् धर्मान् परित्यज्य विहाय यद्वा "जीवेशौ आभासेन करोति" इतिश्रुतेः। मम आभासिकं मायिकम् असत्यस्वरूपं परित्यज्य माम् " माया तत्कार्यसम्बन्धरहितं नित्यं निराभासं शुद्धं सच्चिदानन्दैकस्वरूपम् एकमद्वितीयं परंब्रह्म शरणं व्रज मां परंब्रह्मैव अनुसंधेहि। अहं परमात्मा त्वा त्वां सर्वदा सर्वत्र ब्रह्मैव पश्यन्तं त्वाम् सर्वपापेभ्यः सर्वेभ्यः जराजन्ममृत्युकारकेभ्यः पापेभ्यः मोक्षयिष्यामि ~~मोचयिष्यामि~~ प्रापयिष्यामि त्वं मा शुचः मा शोकं कुरु ॥ ६६ ॥

(मूलगी.) सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥

(वेदगी.) मा बिभेर्न मरिष्यसि जरदष्टिं कृणोमि त्वा।
निरवोचमहं यक्ष्ममङ्गेभ्यो अङ्गज्वरं तव ॥ ८ ॥

अथ. कां. ५ अनु. ६ सू. ३० मं. ८ यद्वा "न तमंहो न दुरितं ×यद्वा यक्ष्मा व्याधीनो राजा जन्ममरणादि हेतुकं कर्म, तथा कुतश्चन नारातयस्तितिरुर्न द्वयाविनः। विश्वा इदस्मात् ध्वरसो विबाधसे यं सुगोपा रक्षसि ब्रह्मणस्पते" ऋ. २।२३।५

मा इति = हे मुमुक्षो! अहं परमात्मा निरवोचम् निःशेषतया कथयामि। तव अङ्गेभ्यः देहात् यक्ष्मं सांसारिकजनैः पूज्यम् अङ्गज्वरं देहजनितपापज्वरम् अपाकरोमीति शेषः। अतः त्वं मच्छरणं प्राप्य न मरिष्यसि भूयोभूयो मृत्युं न प्राप्स्यसीत्यतः मा बिभेः मम मृत्युर्भविष्यति पुनर्जन्म भविष्यतीति भयं मा कुरु। त्वा त्वां मुमुक्षुं भक्तं जरदष्टिं जराविहीनं मुक्तं कृणोमि करोमि। ८ ॥

न तमिति = हे ब्रह्मणस्पते! हे ब्रह्माण्डस्वामिन्! सुगोपाः सम्यक्तया रक्षकः त्वं यं मच्छरणं प्राप्तं यं भक्तजनं रक्षसि। न तं अंहः पापं बाधते, न दुरितं भवति। अरातयः काम क्रोधादि शत्रवः कुतश्चन कदाचिदपि ~~भव~~ न बाधन्ते। द्वयाविनः इहलोक परलोकयात्रिकस्य तितिरुः तिरस्कारः न भवति अपितु लोकद्वये आमंत्रितो भवति। अस्मात् कारणात् विश्वाः सकलाः ध्वरसः वाचिककायिकमानसिकहिंसा ते न विबाधसे = निरोधेन न बाधन्ते ॥ ५

६७ मि० = हे अर्जुन! इदं ज्ञानशास्त्रं मोक्षशास्त्रं वा ते त्वया अतपस्काय = नास्ति ऋतं सत्यं वा वैदिककर्मादिकं तपः यस्य, सः अतपस्कः तस्मै अतपस्काय विषयाऽऽसक्ताय पुरुषाय न वाच्यं न कथनीयम्। अभक्ताय भगवद्भक्तिशून्याय कदाचन न वाच्यम्। तथा च अशुश्रूषवे = श्रोतुमिच्छा शुश्रूषा, शुश्रूषा यस्याऽस्ति स शुश्रूषुः "सनाशंसभिक्ष उः" न शुश्रूषुः अशुश्रूषुः तस्मै अशुश्रूषवे गीताशास्त्रं श्रोतुमिच्छारहिताय अपि न वाच्यम्। यः माम् प्राकृतं मनुष्यं मत्वा अभ्यसूयति निन्दति तस्मै अपि इदं गीताशास्त्रं न वाच्यम् ॥६७॥ य इति = यः ब्रह्मविद् यतिः मद्भक्तेषु मां परमात्मानमेव आराधयन्तः ये भजन्ति ते मद्भक्ताः भगवद्भक्ताः, तेषु मद्भक्तेषु भगवद्भक्तेषु इदं परमं परमपुरुषार्थसाधनम् अत्युत्तमं गुह्यं गोप्यम् अतपस्कादिभ्योऽवाच्यं गीताज्ञानम् अभिधास्यति कथयिष्यति। स मयि परमात्मनि पराम् अनन्यां भक्तिं सर्वत्र मद्भावप्रिदृष्टिं कृत्वा मां परमात्मानमेव एष्यति प्राप्स्यति इत्यत्र असंशयः संशयलेशोऽपि नास्ति ॥६८॥ नेति = यः गीताज्ञानोपदेष्टाऽस्ति, तस्मात् पुरुषात् अन्यः इतरः कश्चित् पुरुषः प्रियतमः मम प्रसत्तेः श्रवणमननादिसाधनानि ये कुर्वन्ति, ते प्रियकृतः तेभ्यः प्रियकृद्भ्यो इष्टतमः प्रियकृत्तमः अतिशयकर्ता मनुष्येषु मंत्रस्तोत्रादिबहिरङ्गसाधनपरेषु मनुष्येषु नास्ति। तस्मात् प्रियकृत्तमात् पुरुषादन्यः भिन्नः प्रियतरः अतिशयेन प्रियः भुवि पृथ्वीलोके मे न भविता न च भविष्यति ॥६९॥

(मूलगी.) इदं ते नाऽतपस्काय नाऽभक्ताय कदाचन। न चाशुश्रूषवे वाच्यं
न च मां योऽभ्यसूयति ॥६७॥ य इदं परमं गुह्यं मद्भक्तेष्वभिधा-
स्यति। भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥६८॥ न च
तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः। भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥६९॥

(वेदगी.) विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम्।
निरु. अध्या. २ खं. ४

अर्थ = विद्या = ब्रह्मज्ञानं अर्थात् वेदवाणी ह = प्रसिद्धौ वै = निश्चयेन ब्राह्मणं ब्रह्मज्ञानिनं गीताशास्त्रम् आजगाम, आगता अकथयत् च। मा = मां गोपाय अनधिकारिभ्यः रक्ष, अहं वेद गीताशास्त्रप्रतिपादितं ज्ञानं ते = तव ब्रह्मज्ञानिनः शेवधिः निधिः आनंदकोशोऽस्मि। हे ब्रह्मन्! त्वं असूयकाय परनिन्दकाय अनृजवे कुटिलाय अयताय असावधानाय चञ्चलाय इति यावत्। मा = मां विद्या न ब्रूयाः न कथय। असूयकादिभ्यः कथने न निर्वीर्या भवि ष्यामि। अधिकारिभ्यः कथने न तथा वीर्यवती बलवती अर्थात् वृद्धिमती स्याम् ॥४॥

अधिकारी

हे अर्जुन! यः पुरुषः आवयोः तव च मम च आवयोः संवादं संवादरूपं धर्म्यं धर्मादनपेतम् इमं गीताग्रन्थम् अध्येष्यते नियमपूर्वकं पठिष्यति। तेन गीताशास्त्रभक्तेन पुरुषेण अहं परमेश्वरः ज्ञानयज्ञेन ज्ञानमेव यज्ञो ज्ञानयज्ञस्तेन ज्ञानयज्ञेन इष्टः प्रियः आराधितः स्यां भवेयम् इति मे मम मतिः बुद्धिः अस्ति ॥ ७० ॥

(मूलगी.) अध्येष्यते च य इमं धर्म्यं संवादमावयोः।
ज्ञानयज्ञेन तेनाऽहमिष्टः स्यामिति मे मतिः ॥ ७० ॥

(वेदगी.) इमं स्तोमं सक्रतवो मे अद्य मित्रो अर्यमा वरुणो जुषन्त ।
आदित्यासः शुचयो धारपूता अवृजिना अनवद्या अरिष्टाः ॥ २ ॥
ऋ. अष्ट. २ अध्या. ७ व. ६ मं. २ (मंड. २ अनु. ३ सू. २७ मं. २)

ब्रह्मज्ञानोपलब्ध्यवसरे

इममिति-मित्रः प्रमीतेस्त्रायकः, यद्वा सर्वेषां स्निग्धः। अर्यमा = अरीन् कामादिशत्रून् नियच्छतीति अर्यमा कामक्रोधादिनियन्ता। वरुणः सर्वश्रेष्ठः पापनिवर्तको वा, एतद्गुणविशिष्टाः पुरुषाः सक्रतवः समानकर्माणः समानप्रज्ञा वा अद्य इदानीम् इमं मे मया प्रोक्तं स्तोमं ज्ञानशास्त्रं जुषन्त जुषयन्ताम् सेवन्ताम्। मत्प्रदत्तं ज्ञानं सेवमानाः ते पुरुषाः आदित्यासः ज्ञानेनौ सूर्यवद्देदीप्यमानाः शुचयः शुद्धान्तःकरणाः धारपूताः ज्ञानधाराभिः पूताः पवित्राः क्षालिताः वा निर्मला इत्यर्थः। अवृजिनाः = वृजी वर्जने सर्वेषां ज्ञानिनां संग्राहकाः यद्वा वृजिनं पापं तेन रहिताः सन्तः अनवद्याः अवद्येन गर्ह्येण पापेन रहिताः अतः अरिष्टाः कर्मनेऽपि पापकर्मणाऽहिंसिताः वर्तन्ते ॥ २ ॥

संजय उवाच। हे धृतराष्ट्र! वासुदेवस्य वसन्ति भूतानि अस्मिन्,, यद्वा भूतेषु वसति इति वसुः। वसुश्चासौ देवः वसुदेवः।
वसुदेवस्याऽपत्यं पुमान् वासुदेवः श्रीकृष्णः तस्य वासुदेवस्य श्रीकृष्णस्य च तथा महात्मनः = महान् आत्मा मनः
यस्य स महात्मा महाऽनुभावः तस्य महात्मनः महाऽनुभावस्य पार्थस्य पृथायाः कुन्त्याः अपत्यं पुमान् इति पार्थः
अर्जुनः तस्य पार्थस्य, अर्जुनस्य इति पूर्वोक्तम् अद्भुतम् आश्चर्यकरम् इमं गीताग्रन्थं संवादं प्रश्नप्रतिवचन
रूपं संलापं रोमहर्षणं रोमाञ्चप्रफुल्लितरम् अश्रौषम् आकर्णितवान् अस्मि ॥७४॥

सञ्जय उवाच

(मूलगी.) इत्यहं वासुदेवस्य पार्थस्य च महात्मनः।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥७४॥

(वेदगी.) . . . . . . . . . . . . . .

. . . . . . . . . . . . . . .

व्यासेति = व्यासप्रसादात् व्यासस्य वेदविभाजकस्य श्रीकृष्णद्वैपायनस्य प्रसादात् अनुग्रहात् अहं सञ्जयः स्वयं स्वमुखेन
साक्षात् कथयतः वर्णयतः योगेश्वरात् योगानां हठसिद्धीनाम् ईश्वरः स्वामी योगेश्वरः। यद्वा योगो मायायोगः सख्यादिः
तदीश्वरः नियन्ता योगेश्वरः। यद्वा योगो ज्ञानयोगः तस्य ईश्वरः अधिपतिः योगेश्वरः ज्ञानाऽधिपतिः तस्मात् योगे-
श्वरात् ज्ञानाऽधिपतेः श्रीकृष्णात् परम् अत्यन्तं गुह्यं गुप्तम् इमं संवादं योगं ज्ञानयोगं श्रुतवान् आकर्णितवानस्मि
७५॥

(मूलगी.) व्यासप्रसादाच्छ्रुतवानिमं गुह्यमहं परम्।
योगं योगेश्वरात् कृषणात् साक्षात्कथयतः स्वयम्॥७५॥

(वेदगी.) . . . . . . . . . . . .

. . . . . . . . . . . .

राजाभित- हे राजन! हे धृतराष्ट्र! केशवार्जुनयोः कृष्णार्जुनयोः पुण्यं पवित्रं पुण्यकरं वा अद्भुतम् आश्चर्यकरं संवादं प्रश्नोत्तरमयं सं-लापम् इमं गीताख्यं ग्रन्थं संस्मृत्य संस्मृत्य भूयोभूयः स्मृत्वा मुहुः मुहुः पुनः पुनः हृष्यामि हर्षं प्राप्नोमि ॥७६॥

(मूलगी.) राजन संस्मृत्य संस्मृत्य संवादमिमम द्भुतं ह्र।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥७६॥

(वेदगी.) . . . . . . . . . . . .

. . . . . . . . . . . .

तच्चेति= हे राजन्! हे धृतराष्ट्र! हरेः हरति पापानीति हरिः तस्य हरेः श्रीकृष्णस्य तत् अत्यद्भुतम् अत्याश्चर्यकरं रूपं सहस्रशी र्षात्मकं विराड्स्वरूपं संस्मृत्य संस्मृत्य स्मृत्वा स्मृत्वा मे महान् विस्मयः आश्चर्यं भवति। पुनः पुनः च भूयोभूयः एतत् संस्मृत्य हृष्यामि हर्षं प्राप्नोमि। धन्योऽहं धन्योऽहमिति संतोषसमुद्रे निमज्जामीतिभावः।७७॥

(मूलगी.) तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः।
विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः॥७७॥

(वेदगी.) . . . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . . . . . .

यत्रेति = हे धृतराष्ट्र! यत्र यस्मिन् पक्षे योगेश्वरः विद्याऽविद्याभ्यां युज्यते इतियोगः, योगौ विद्याऽविद्ये ईशितुम् शीलमस्यास्तीति योगेश्वरः यद्वा योगः ज्ञानयोगः कर्मयोगश्च तयोः ईश्वरः योगेश्वरः। यद्वा चित्तवृत्तिनिरोधः योगः योगस्य निरुद्धचित्तवृत्तेः ईश्वरः योगेश्वरः श्रीकृष्णः अस्ति। यत्र यस्मिन् पक्षे धनुर्धरः, गाण्डीवधनुर्धारकः पार्थः अर्जुनः अस्ति। तत्र तस्मिन् पक्षे ध्रुवा स्थिरा श्रीः राजलक्ष्मीः तिष्ठति। तत्र भूतिः गजतुरगधनधान्यादिसंपत्तिः स्थिरा तिष्ठति। तत्रैव ध्रुवा स्थिरा नीतिः शास्त्रप्रदर्शिता मर्यादा तिष्ठति इति मम मतिः सम्मतिः निश्चयः अस्तीति। अतः त्वं स्वपुत्रपराजयं विद्धीति ॥७८॥ इतिश्रीलैयावास्तव्यजगन्नाथशास्त्रिकृतायां गीतावेदार्थबोधिन्याम् अष्टादशोऽध्यायः समाप्तः ॥१८॥ वसुनन्दांकभूचन्द्रे वत्सरे वैक्रमे मया। [illegible] द्वादश्यां भृगौ ज्येष्ठे ~~[illegible]~~ गीताव्याख्या सुपूरिता ॥१॥

(मूलगी.) यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥
इतिश्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नाम अष्टादशोऽध्यायः समाप्तः १८॥

(वेदगी.) यस्मिन् विश्वा अधि श्रियो रणन्ति सप्त संसदः।
इन्द्रं सुते हवामहे ॥ अथ. कां. २० सू. ११० मं. २

इति श्री वेदगीता समाप्ता। अर्थात् परमात्मप्रतिलब्धये

यस्मिन्निति = यस्मिन् ~~अधि~~ = यस्मिन् अधि परमात्मनि स्तुते सति विश्वाः समग्राः श्रियः ~~राज~~लक्ष्मीः विजयलक्ष्मीप्रभृतयः लक्ष्म्यः तथा सप्त संसदः सप्त भूर्भुवः स्वरादिनिवासस्थानानि यद्वा शरीराश्रयः सप्तधातवः सप्तप्राणाः वा अधिरणन्ति शोभन्ते। अतः वयं भगवद्भक्ताः इन्द्रे भक्त्यैश्वर्यवन्ते जीवात्माने सुते ~~[illegible]~~ ब्रह्मानंदरसप्राप्तौ हवामहे आह्वाने कुर्मः अर्थात् परमात्मनं तौर जीवात्मनमा द्वयम इतिभावः
ज्योतिर्वी
इतिश्रीसारस्वतान्वयलैयावास्तव्यजगन्नाथन्यायभूषणशास्त्रिओ.टी. कृतायां वेदगीतार्थबोधिन्याम् अष्टादशोऽध्यायः समाप्तः। समाप्तश्चायं ग्रन्थः श्रीभगवत्कृष्णचंद्रप्रसादतः। शुभं नो भूयात। श्रीरस्तु॥